मायोपजीविनांभूतानांबालग्रहादीनांपिशाचानांपिशिताशनानांतामसानांचपीडकानामदृश्यरूपाणांममाहात्म्यस्यपठनादेवनाशनंदूरीकरणंभवति ॥ १८ ॥ ममसांनिध्यकारकंनैकट्यकारकम् ॥ संनिधिकारकमितिपाठेपिसंनिधिःसंनिधानम् ॥ इतिव्याख्याश्रयणात्सएवार्थः ॥ यद्वा संनिधिःमहानिधिःमहापद्मादिः तस्यकारकंप्रापकंपठ्यमानंसदितिभावः ॥ १९ ॥ युग्मम् ॥ पुंभिरेभिःप्रकारैर्वत्सरेणयाक्रियतेमेमह्यंप्रीतिः सास्मिन्सन्माहात्म्येसकृदेकवारमेवउच्चरितेपठितेश्रुतेवाभक्तिमद्भिःसर्वकामदुघोपार्जितेवस्यात् ॥ पशुभिःचतुष्पद्भिःछागमेषमहिषमातंगादिभिःद्विपाद्भिर्महापशुभिश्चनरैःपुष्पैःसुरभिसंभृतैःअर्घैःपूजांगैर्मधुघृतादिभिःधूपैःकर्पूरागरुमृगमदादिगर्भितैर्बहुरूपादिभिर्नानाकृतिगन्धादिभिः चशब्दात् श्रीवासादिधूपागृह्यंते ॥ तैर्गंधैःगन्धसारघनसाररक्तचन्दनमृगमदकंकोलकालागरुकुंकुमादिभिःदीपैःकर्पूरघृतादिप्रवर्त्तितैर्माणिक्यमहोभिरुपकल्पितैःसूर्यमहोभिश्चन्द्रमहोभिरुडुमहोभिःपरमात्मपरज्योतिर्भिश्चोपकल्पितैः ।

सर्वंममैतन्माहात्म्यंममसन्निधिकारकम् ॥ सर्वंकृत्स्नमेतदादिमध्यावसानलक्षणम् ॥ १९ ॥
पशुपुष्पार्घधूपैश्चगंधदीपैस्तथोत्तमैः ॥ विप्राणांभोजनैर्होमैःप्रेक्षणीयैरहर्निशम् ॥ २० ॥
अन्यैश्चविविधैर्भोगैःप्रदानैर्वत्सरेणया ॥ प्रीतिर्मेक्रियतेसास्मिन्सकृदुच्चरितेश्रुते ॥ २१ ॥

अतएवैवंविधैरुत्तमैःश्रेष्ठतमैः ।तथाउत्तमैर्विविधैर्विप्राणांकर्त्तव्यैर्भोजनैःषड्रसोपेतैर्भोज्यैरत्नादिभिरुचितैः ॥ तथाविविधैर्होमैः । तथाऽहर्निशंदिवानिशंविविधैःप्रेक्षणीयैर्दर्शनीयैर्नृत्यगीतवाद्यैः ॥ तथान्यैश्चविविधैर्भोगैस्तथादानैर्मत्प्रीत्यर्थैर्विविधैः ॥ चशब्दाद्वस्त्रालंकारपूजादिभिःसाधनैःवत्सरेणयामेप्रीतिःसकलकामदुघाभक्तैःक्रियतेसास्मिन्प्राक्प्रपंचितेममाहात्म्येसकृदेकवारंभक्त्याउच्चरितेपठितेश्रुतेवासाधयितुंसुगमेत्यर्थः ॥ यद्वा सकृत्सहद्वित्रैःपुंभिःपंचषैःसप्ताष्टैरेकद्वित्रिचतुरैरेकतयोच्चरितेश्रुतेवेत्यर्थः ॥ सहार्थेचैकवारेचसदार्थेवाव्ययंसकृत् ॥ सकृत्सुचरितेश्रुतेइतिपाठेश्रुतशब्दतःश्रवणप्राधान्यंसुचरितेशोभनेचरिते । प्रोक्षणीयैरहर्निशमितिपाठेतुकश्चिदाह ॥ मन्त्रपूतजलोक्षणसंस्कृतहतच्छागादिपशुबलिरितितन्न ॥ पशुपुष्पार्घधूपैरितिपशुग्रहणेनपौनरुक्त्यप्रसंगात् ॥ ॥ ९५ ॥

ततइत्थंतदर्थोत्रवक्तव्यः । उक्षसेचने । प्रत्यहंपंचामृताभिषेकैरविच्छिन्नपीयूषधाराभिषेकैर्वेति ॥ २० ॥ २१ ॥ ममदेव्यामाहात्म्यस्यश्रुतंश्रवणम् कर्तृ

ततइत्थंत्वर्थोत्रवक्तव्यः । उक्षसेचने । प्रत्यहंपंचामृताभिषेकैरविच्छिन्नपीयूषधाराभिषेकैर्वेति ॥ २० ॥ २१ ॥ ममदेव्यामाहात्म्यस्यश्रुतंश्रवणम् कर्तृ पापानिहरति अपनयति नपुंसकेभावेक्तः ॥ तद्योगेषष्ठ्येव ॥ यद्वा ममममाहात्म्यंश्रुतंसत्पापानिहरति ॥ तथाभजतामारोग्यंप्रयच्छतिदानप्रतिग्रहाभावात्ष ष्ठ्येव ॥ ममजन्मनामुत्पत्तीनांब्रह्माण्यादिरूपतयाप्रादुर्भावानांकीर्त्तनंकथनंभूतेभ्यःहिंस्रेभ्यः भूतप्रेतपिशाचसिंहव्याघ्रग्रहादिभ्यःभक्तानांरक्षांकरोति॥ २२॥ युद्धेषुयद्दुष्टदैत्यनिबर्हणंमेदेव्याःचरितंशस्त्रप्रयोगलक्षणंसंग्रामकौशलमभूत्तस्मिञ्छ्रुतेसतिश्रुतवतांपुंसांयुद्धेषुततोन्यत्रचवैरिकृतंभयंनजायते। निबर्हयतिनिबर्ह णम्।नंद्यादित्वाल्ल्युः।दुष्टानांदैत्यानांनिबर्हणम् चरित्रम् ॥ २३ ॥ सुमेधसामार्कंडयेनचततःपूर्वैश्चब्रह्मर्षिभिःयाःस्तुतयःकृताःतथापिममतावर्तेमोहगर्तेनिपातिताः

श्रुतंहरतिपापानितथारोग्यंप्रयच्छति ॥ रक्षांकरोतिभूतेभ्योजन्मनांकीर्तनंमम ॥ २२ ॥ युद्धेषुचरितंयन्मेदुष्टदैत्यनिबर्हणम् ॥ तस्मि ञ्छ्रुतेवैरिकृतंभयंपुंसांनजायते ॥ २३ ॥ युष्माभिःस्तुतयोयाश्चयाश्चब्रह्मर्षिभिःकृताः ॥ ब्रह्मणाचकृतायास्ताःप्रयच्छंतिशुभांग तिम् ॥ २४ ॥ अरण्येप्रांतरेवापिदावाग्निपरिवारितः ॥ दस्युभिर्वावृतःशून्येगृहीतोवापिशत्रुभिः ॥ २५ ॥

महामायाप्रभावेणेत्यादयःताश्चशुभांगतिंप्रयच्छंतिपठ्यमानाःपठ्यद्भ्यःपुंभ्यःयाश्चब्रह्मणामधुकैटभभीतेनकृताःस्तुतयःविश्वेश्वरींजगद्धात्रीमित्यादयः ।अथचयु ष्माभिरेवकृताःस्तुतयःदेव्यायया ततमिदंजगदात्मशक्त्येत्यादयः ॥ नमोदेव्यैइत्यादयश्च ॥ देविप्रपन्नार्तिहरेप्रसीदेत्यादयश्च । तास्त्रिविधाःस्तुतयः ॥ २४ ॥ एकान्वयमिदंश्लोकचतुष्टयम् ॥ अरण्येविपिनेवावर्त्तमानःममदेव्याएतच्चारितंस्मरन्नरःसंकटाद्दुःखघटनान्मुच्येतस्वयमेव । संकटंनातुसंबाधः।कर्मकर्त्तरिमु चेर्लिङ् ॥ तथाप्रांतरेवापिदूरेजनशून्यमार्गे ॥ प्रांतरंदूरशून्योध्वा ॥ तथादावाग्निपरिवारितःसन्नपिवा ॥ तथादस्युभिःतस्करैर्वृतःवेष्टितोवा ॥ तथाशून्ये

निर्जनप्रदेशेशत्रुभिर्गृहीतोवा ॥ तथासिंहेनव्याघ्रेणवानुयातोनुद्रुतः॥तथावनहस्तिभिर्वृतोवाहंतुमनुयातः ॥ तथाक्रुद्धेनराज्ञावध्योयंवधार्होयमित्याज्ञप्तः ॥ हंतुमाज्ञापितोवा ॥ तथाबन्धगतोपिवा ॥ तथावातेनघूर्णितःव्याकुलितःबाधितोपास्तोवा ॥ महार्णवेसमुद्रेपोतेनौकाविशेषे सांयात्रिकाःपोतवणिजः कथ्यंते तत्रस्थितोवा पानपात्रेशिशौपोतः ॥ तथाभृशदारुणेत्यर्थंभीषणेसंग्रामेशस्त्रेष्वायुधेषुपतत्सु । सर्वाबाधासु ॥ सर्वाआसमंताद्बाधाः महाबाधाः तासु ॥ सर्वबाधास्वितिपाठेसएवार्थोभवत्यदूरविकर्षात् ॥ घोरासुव्रणपीडासुवर्त्तमानोवा ॥ तथावेदनासुतत्तद्दुःखानुभवेषुअभ्यर्दितः वर्तमानः यद्वा तीव्रवेदनयाऽभ्यर्दितःहिंसितोपिवासर्वत्रैतन्ममचारितंस्मरन्नरःसंकटान्मुच्येतस्वयमेवेतियोजनीयम् ॥ इहारण्येप्रांतरेवापीत्यतःश्लोकात्पूर्वंसिंहव्याघ्रानुयातोवेति

सिंहव्याघ्रानुयातोवावनेवावनहस्तिभिः ॥ राज्ञाक्रुद्धेनचाज्ञप्तोवध्योबंधगतोपिवा ॥ २६ ॥ आघूर्णितोवावातेनस्थितःपोतेमहार्णवे ॥ पतत्सुचापिशस्त्रेषुसंग्रामेभृशदारुणे ॥ २७ ॥ सर्वाबाधासुघोरासुवेदनाभ्यर्दितोपिवा ॥ स्मरन्ममैतच्चरितंनरोमुच्येतसंकटात् ॥ २८ ॥ ममप्रभवात्सिंहाद्यादस्यवोवैरिणस्तथा ॥ दूरादेवपलायंतेस्मरतश्चरितंमम ॥ २९ ॥ ऋषिरुवाच ॥ इत्युक्त्वासाभगवतीचंडिकाचंडविक्रमा ॥ पश्यतामेवदेवानांतत्रैवांतरधीयत ॥ ३० ॥

पठंतिकेचित् ॥ अतश्चममप्रभावात्सिंहाद्याइत्युपपन्नंभवति ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ ममप्रभावात्सामर्थ्यात्सिंहाद्यास्तथादस्यवस्तस्करास्तथावैरिणश्चशत्रवःचरितंस्मरतःपुरुषात्सकाशाद्दूरादेवपलायंते ॥ २९ ॥ इत्थमुक्त्वासाभगवतीचंडविक्रमाप्रगल्भवीर्याचंडिकादेवीपश्यतामेवदेवानांतत्रैवपुरोभागएवांतरधीयत । अंतर्धानमगात् ॥ श्रदंतरोरुपसर्गवद्वृत्तिर्व्याख्येया ॥ अंतःपूर्वाद्धधातेःकर्मकर्त्तरिलिङ् ॥ यद्वा तान्देवान्त्रायतेइतितत्रा पालयंतीसत्येवस्वयमंतरधीयत ॥ आतोनुपसर्गेकः ॥ यद्वा तत्रैवदेवशरीरेष्वेवांतरधीयत । स्वयमेवशरीरेष्वेवांतर्न्यलीयतेत्यर्थः ॥ पश्यतामित्यनादरेषष्ठीतिपक्षेयथाजननीसुतान्व्याजतोनादृत्यालोकनादन्तर्धत्तेतथेयमपिसर्वजननीदेवदर्शनतोंतरधीयतस्वयमेवेतिभावः ॥ ३० ॥

थाजननींसुतान्व्याजतोनादृत्यालोकनादन्तर्धत्ततथैयमपिसर्वजननीदेवदर्शनतोतिरधीयतस्वयमेवेतिभावः ॥ ३० ॥



अथतेदेवाअपिदेव्याविनिहतारयः नाशितशत्रवःअतएवयथापुरापूर्वकालइवनिरातंकाःकृच्छ्रजीवनतोनिर्भयाः यज्ञभागभुजःयज्ञांशान्भुंजानाः संतः स्वाधिकारान्स्वव्यापारान्चक्रुः कृतवन्तः ॥ ३१ ॥ युधिसंग्रामेदेव्यातस्मिञ्जगद्विध्वंसिनित्रैलोक्यभंजिनिमहोग्रेअतुलविक्रमेअनुपमशक्तौदेवरिपौससैन्येशुम्भेमहावीर्येनिशुम्भेचनिहतेसतिशेषाः दैत्याःपातालमाययुः बलिसद्मप्राविशन् ॥ चशब्देनससैन्येइतिविशेषणंलभ्यते पतंत्यस्मिन्नितिपातालम् ॥ ३२ ॥ हेभूप एवमुक्तरीत्यासाभगवतीनित्यापिध्रुवाअविनश्वराअविकारापिसतीपुनःपुनःसंभूयप्रादुर्भावमवाप्यजगतःपरिपालनंकुरुते ॥ उक्तंचप्रागपि ॥ नित्यैवसाजगन्मूर्त्तिरिति ॥ देवानांकार्यसिद्ध्यर्थमितिच ॥ ३३ ॥ सैवदेवीविश्वंप्रसूयतेजनयति ॥ षूङ्प्राणिप्रसवेदिवादिः॥ तथैवहेतुभूतयाएतद्विश्वंमोह्यते ॥ मुह

तेपिदेवानिरातंकाःस्वाधिकारान्यथापुरा ॥ यज्ञभागभुजःसर्वेचक्रुर्विनिहतारयः ॥ ३१ ॥ दैत्याश्चदेव्यानिहतेशुंभेदेवरिपौयुधि ॥ जगद्विध्वंसकेतस्मिन्महोग्रेऽतुलविक्रमे ॥ निशुंभेचमहावीर्येशेषाःपातालमाययुः ॥३२॥ एवंभगवतीदेवीसानित्यापिपुनःपुनः ॥ संभूयकुरुतेभूपजगतःपरिपालनम् ॥ ३३ ॥ तयैतन्मोह्यतेविश्वंसैवविश्वंप्रसूयते ॥ सायाचिताचविज्ञानंतुष्टाऋद्धिंप्रयच्छति ॥ ३४ ॥ व्याप्तं तयैतत्सकलंब्रह्मांडंमनुजेश्वर ॥ महाकाल्यामहाकालेमहामारीस्वरूपया ॥ ३५ ॥

वैचित्त्येदिवादिः ॥ अविवेकेनयोज्यते ॥ ममतासहितंक्रियते ।सादेवीभक्तैःयाचितासतीविज्ञानंचप्रयच्छति । सैवदेवीतुष्टासतीतिप्रसाजानितसंतोषासतीवृद्धिंचसंपदंचमहतींप्रयच्छतिददाति। तुष्टाऋद्धिमितितुपाठे असंहितयानिर्देशःकृतः॥ ऋत्यकइतितुप्रकृतिभावेतस्याकःस्थानेह्रस्वत्वेचसती तुष्टऋद्धिमितिस्यात् ॥ खट्वऋश्यइतिवत् ॥ सायाचितार्थविज्ञानमितिपाठे ॥ अर्थेषुविज्ञानमितिविग्रहः ॥ एतत्प्रागप्युक्तम् ॥ तन्नात्रविस्मयःकार्योयोगनिद्राजगत्पतेः॥ महामायाहरेरेषातयेति ॥ ३४ ॥ हेमनुजेश्वरसुरथ ॥ महामारीस्वरूपयातयामहाकाल्यामहातामस्यामहादेव्याएतत्सकलंब्रह्मांडंत्रैलोक्यगर्भकंस्थानंव्याप्तम् ॥ महाकालेप्रलयसमये॥ महांश्चासावकालश्चेति महाकालःअनिष्टकालः ॥ यद्वा महांश्चासौकालश्चमहाकालःकालाग्निरुद्रस्तस्मिन्नुपस्थितेमहाकालेमहतिप्रलयसमये ॥

महांश्चासौकालःकालाग्निरुद्रस्तस्येयंस्त्रीमहाकालीतया॥मारयतिसंहरतिमारःमहांश्चासौमारश्चमहामारःरुद्रस्तस्यस्त्रीमहामारीसास्वरूपंयस्याःसादेवीमहामारी स्वरूपातया ॥ यद्वा महउद्भवउत्सवः॥ महानुत्सवानासमंतान्मारयतिनाशयतिमहामारीमहाप्रलयानलज्वालातस्याइवरूपंयस्याःसातया॥ मृत्युजिह्वामहा मारीजगत्संहारकारिणी ॥ महारात्रिर्महानिद्रामहाकाल्यतितामसी ॥ सैवकालानलज्वालासैवाविद्यातमःप्रसूः॥सैवमोहप्रसूर्मृत्युःसैवसर्वाधिदेवता ॥ ३५॥ अजाजन्मरहितासनातनीनित्यादेवीकालेभूतानांप्रलयसमयेतमोगुणमयीसतीमहामारीतिकथ्यते ॥ तथाकालेउत्पत्तिसमयेसैवभूतानांसर्गसमयेरजःप्रधानास्थि तिंकरोति ॥ ३६ ॥ भवकालेदेवीसांनिध्यभवकालेनृणांगृहेसैवलक्ष्मीवृद्धिप्रदा ॥ सम्पद्भवप्रदाभवति ॥ प्रेदाज्ञःकः ॥ तथासैवदेवीअभावेदेवीसांनिध्या

सैवकालेमहामारीसैवसृष्टिर्भवत्यजा ॥ स्थितिंकरोतिभूतानांसैवकालेसनातनी ॥ ३६ ॥ भवकालेनृणांसैवलक्ष्मीर्वृद्धिप्रदागृहे ॥ सै वाभावेतथालक्ष्मीर्विनाशायोपजायते ॥ ३७ ॥ स्तुतासंपूजितापुष्पैर्धूपगंधादिभिस्तथा ॥ ददातिवित्तंपुत्रांश्चमतिंधर्मेगतिंशुभाम् ॥ ॥ ३८ ॥ इतिश्रीमार्कंडेयपुराणेसावर्णिकेमन्वंतरेदेवीमाहात्म्येशुंभनिशुंभवधोनामद्वादशोऽध्यायः ॥ १२ ॥

भावेऽलक्ष्मीःसम्पदःविनाशायाभवायउपजायते ॥ यत्रलक्ष्मीःतत्रदेव्याःसांनिध्यम् ॥यत्रदेव्याःसांनिध्यंनतत्रसम्पदपिनेत्यन्वयव्यतिरेकौवेदितव्यौ ॥३७॥ नित्यंदेवीसांनिध्यकारणंतत्फलंचोपदिशतिसुमेधाऋषिः ॥ हेनृप सादेवीस्तुतास्तावकैःपदैःसंकीर्तिताचतथापुष्पैःसंपूजिताचतथागन्धैःकर्पूरचन्दनमृगमदादि भिर्विलिप्तातथाधूपैर्बहुविधैर्धूपिता ॥ तथाआदिग्रहणाद्वस्त्रालंकारतांबूलादिभिरानंदिताभक्तैःप्रणताचसतीअप्रार्थितैवभक्तेभ्यःवित्तंधनंपुत्रांश्चआयुरारोग्यमै श्वर्यंचशब्दसूचितम् ॥ धर्मेमतिंचशुभांगतिंचददाति । यदुक्तंप्राक् ॥ साविद्यापरमामुक्तेर्हेतुभूतासनातनी । संसारबंधहेतुश्चसैवसर्वेश्वरेश्वरी ॥३८॥ इतिमा र्कंडेयराजाधिराजतोमरान्वयश्रीमदुद्धरणात्मजशंतनुचक्रवर्तिविरचितायांदेवीमाहात्म्यटीकायांशुम्भनिशुंभवधोनामद्वादशोध्यायः ॥ १२ ॥

॥ ऋषिरुवाच ॥ सुमेधाभगवानृषिःसुरथं राजानमुचितांवाचमूचे ॥ हेसुरथ एतदुत्तमंश्रेष्ठतमंसर्वार्थसाधनंतेतुभ्यंकथितम् ॥ साचदेवीएवंप्रभावाईदृग्विध सामर्थ्यावर्तते ॥ साका ययादेव्यासर्वजनन्यासर्वपोषिण्यासर्वसंहारिण्याइदंजगद्विश्वंधार्यतेसृज्यतेपाल्यते ॥ प्रत्यवसीयतेच ॥ यथाकालम् ॥ धृङ्अव स्थानेणिच् ॥ कर्मणियक् ॥ आत्मनेपदंचलटः ॥ क्रियावाचित्वमाख्यातुमेकोत्रार्थःप्रदर्शितः ॥ प्रयोगतोनुसर्त्तव्याअनेकार्थाहिधातवः ॥ महात्मनोमहा मूर्तेर्देव्याभावेकर्मणिब्राह्मणादित्वात्ष्यञिनस्तद्धितेइतिटिलोपेमाहात्म्यमितिसिद्धम् ॥ १ ॥ भगवद्विष्णुमाययातयैवचंडिकयैवविद्याज्ञानंक्रियतेउत्पाद्यते । परमात्मज्ञानसाधनंदेव्येवोपनिषद्रूपेतिभावः ॥ विष्णोर्मायाभगवतीविष्णुमाया भगवद्विष्णुमायातया ॥ यद्वा भगवान्विष्णुः भगवद्विष्णुस्तस्यमाययायदु क्तंसाविद्यापरमामुक्तेर्हेतुभूताइति ॥ ऐश्वर्यस्यसमग्रस्यधर्मस्ययशसःश्रियः ॥ ज्ञानवैराग्ययोश्चैवषण्णांभगइतीरणा ॥ हेराजन्तयामोहरूपयादेव्यात्वंविवे

ऋषिरुवाच ॥ एतत्तेकथितंभूपदेवीमाहात्म्यमुत्तमम् ॥ एवंप्रभावासादेवीययेदंधार्यतेजगत् ॥ १ ॥ विद्यातथैवक्रियतेभगवद्विष्णुमायया ॥ तयात्वमेषवैश्यश्चतथैवान्येविवेकिनः ॥ मोह्यंतेमोहिताश्चैवमोहमेष्यंतिचापरे ॥ २ ॥ तामुपैहिमहाराजशरणंपरमेश्वरीम् ॥ आरा धितासैवनृणांभोगस्वर्गापवर्गदा ॥ ३ ॥

कीसन्नपिसंप्रतिमोह्यसेप्राग्मोहितोभूः ॥ भविष्यतिचकालेमोहमेष्यसिच ॥ तथातथैवएषवैश्यश्चसमाधिर्नाममोह्यतेमोहितश्चमोहमेष्यतिच । तथैवतयैवयु वाभ्यामन्येपिविवेकिनःपुमांसःअधिगतशास्त्राःसंतोप्यपरेचतेभ्यश्चान्येचसर्वेतथैवदेव्यामोह्यंतेमोहिताश्चमोहमेष्यंतिच ॥ यदुक्तंप्राक् ॥ तथापिममतावर्त्तेमोहग र्त्तेनिपातिताइत्यादि ॥ २ ॥ प्राक्राज्ञाभगवंस्त्वामहंप्रष्टुमिच्छाम्येकंवदस्वतदितियद्रहस्यंपृष्टंहेमहाराजसुरथत्वंतांपरमेश्वरींदेवींशरणमुपेहि ॥ उपइहिआ ङुणःउपगच्छशरणंव्रज ॥ सैवदेवीभगवत्येवाराधितातपसातोषितासतीनृणांपुंसांभोगस्वर्गापवर्गदाभुविभोगदा ॥ जन्मान्तरेस्वर्गदा ॥ ततःअपवर्गदामो क्षदाभवतियतोज्ञानदा । ततएवमोक्षदा ॥ ज्ञानादेवतुकैवल्यमितिसिद्धांततः ॥ संप्रदानाभावाद्रजकस्यवस्त्रंददातीतिवत्संबंधेषष्ठ्येव नृणामिति ॥

उपपूर्वइण्गतौ ॥ सेत्यापिच्च ॥ उपइहिइतिस्थिते ॥ एत्येधत्यूठ्सुइतिवृद्धिर्न तद्विधावेचीत्यनुवर्त्तते ॥ ततआद्गुण एवंबाधकाभावात् ॥ आङ्पूर्वत्वेपि
आइहिइतिस्थिते ॥ वृद्धिंबाधित्वाओमाङोश्चेतिपररूपत्वेसतिउपेहीत्येवरूपम् ॥ उपैहीतिवृद्धिकृतःपाठःछांदसःक्काचित्कःसर्वेविधयच्छंदसिविकल्पं
तेइतिवचनात् ॥ यद्वा एहीत्येतद्विभक्तिप्रतिरूपकमव्ययंपृषोदरादित्वात्साधुः ॥ उपएहिउपैहि ॥ महाराज ॥ राजाहःसखिभ्यष्टच् ॥ नपूजनात् पूजायां
स्वतिग्रहणम् ॥ अश्नोतेराशुकर्मणिवरट्चेच्चोपधायाःपरमामीश्वरीम् ॥ ३ ॥ युग्मम् ॥ ऋषिरुवाच ॥ मार्कंडेयोभगवान्मुनिःस्वशिष्यंक्रौष्टुकिंमुनिंवाचमुचितामूचे
हेक्रौष्टुकिमुनेआकर्णय ॥ इतिप्रागुक्तप्रकारेणतस्यसुमेधसोब्रह्मर्षेःवचःश्रुत्वादेवीमाराधयेतिउपदेशवाक्यमाकर्ण्यसुरथोनामनराधिपस्तंसुमेधसंमहाभागंसं
शितव्रतमृषिंप्रणिपत्यप्रणामैराराध्य ॥ पुत्रमित्रकलत्रादावतिममत्वेनअतिमोहेनशत्रुभिःराज्यापहरणेनचहेतुनानिर्विण्णःदुःखितमानसःसन्सद्यःसपदितपसेज

मार्कंडेयउवाच ॥ इतितस्यवचःश्रुत्वासुरथःसनराधिपः ॥ प्रणिपत्यमहाभागंतमृषिंसंशितव्रतम् ॥ ४ ॥ निर्विण्णोतिममत्वेनराज्यापह
रणेनच ॥ जगामसद्यस्तपसेसचवैश्योमहामुने ॥ ५ ॥ संदर्शनार्थमंबायानदीपुलिनसंस्थितः ॥ सचवैश्यस्तपस्तेपेदेवीसूक्तंपरंजपन् ॥ ६ ॥

गाम ॥ तथासमाधिर्नामवैश्यश्चतपसेजगाम ॥ भगस्यऐश्वर्यादेरिदंभागंमहद्भागंयस्यमहाभागस्तम् ॥ संशितंयत्नेनप्रतिपादितंव्रतंयस्ययेनससंशितव्रतस्तम् ॥
शोतनूकरणे ॥ कर्मणिक्तः ॥ शाच्छोरन्यतरस्याम् । शातेरित्त्वंव्रतेनित्यमितिवक्तव्यम् ॥ शंसितव्रतमितिपाठेशंसतेःकर्मणिक्तः ॥ शंसावासंजातायस्य
शंसितंव्रतंशास्त्रोक्तमुपवासादियस्यतम् शंसुस्तुतौ ॥ निर्विण्णस्योपसंख्यानमितिणत्वम् ॥ विद्लुलाभेविदविचारणेवाक्तःनिष्ठानत्वम् ॥ ४ ॥ ५ ॥
अंबायाःजगज्जनन्यादेव्याःसंदर्शनार्थंप्रत्यक्षीकरणाय ॥ नद्याःपुलिनेद्वीपेतटविशेषेवासंस्थितः सैकतेदेशेसम्यगवस्थितःसराजाचसुरथः सवैश्यश्चसमाधि
र्नामपरंश्रेष्ठंसर्वार्थप्रदंकेवलंदेवीसूक्तंवैदिकमृग्विशेषमंत्रंदेव्यधिदैवतंदेव्यांसुष्टुशोभनमुक्तंप्रणीतंदेव्यांवाविषयेसूक्तमुपदिष्टमाचार्यैरागमीयंदेवीप्रणवमग्निगर्भंवा

एतदेववाचारित्रत्रयंजपन् तपस्तेपे । केचित्तुवाग्रहणादंबामातामातृकेतिमातृकामंत्ररूपंदेवीसूक्तमाहुः । अपरेतुदेवीसूक्तंपृथगस्तिरहस्येतज्जपमित्याहुः । अन्येत्वाहुः श्रुतिस्मृतिपुराणोक्तानिदेवीसूक्तानीति ॥ संस्थाधारेस्थितौमृतौ ॥ तपस्तपःकर्मकस्यैवेतितपःकर्त्ताकर्मवद्भवति । उपवासादीनितपांसितापसं तपंतिदुःखयंतिसतापसस्त्वगस्थिभूतःस्ववांछितस्वर्गाद्यर्थंतपस्तप्यते ॥ तपसंतापेलिटितपस्तेपेतपोर्जितवानित्यर्थः ॥ अन्यकर्मकत्वेतु उत्तपतिस्वर्णंसुवर्णकारः ॥ ६ ॥ तौद्वौराजासुरथःवैश्यश्चसमाधिस्तस्मिन्नद्याःपुलिनेतटविशेषे ॥ तोयोत्थितंतत्पुलिनम् ॥ तत्रदेव्याःमूर्त्तिमाकृतिंमहीमयींमृन्मयींप्रतिमांविधाय ॥ मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोरितिविकारावयवायाःमह्याःमयट् ॥ तस्याःदेव्याःअम्बिकायाःपुष्पधूपाग्नितर्पणैःपुष्पैःधूपैःअग्निकार्यैर्होमैः तर्पणैश्चविहितैस्तैरुचितैरर्हणांपूजामाराधनंचक्राते ॥ पृथक्पृथक्विदधाते ॥ मूर्तिःकाठिन्यकाययोः । पूजानमस्यापचितिःसपर्यार्चार्हणाःसमाः ॥

तौतस्मिन्पुलिनेदेव्याःकृत्वामूर्तिंमहीमयीम् ॥ अर्हणांचक्रतुस्तस्याःपुष्पधूपाग्नितर्पणैः ॥ ७ ॥
निराहारौयताहारौतन्मनस्कौसमाहितौ ॥ ददतुस्तौबलिंचैवनिजगात्रासृगुक्षितम् ॥ ८ ॥

पुष्पाणिधूपाःअग्नयस्तर्पणानिचतैः ॥ ७ ॥ निर्निश्चयनिषेधयोः ॥ निराहारौहविष्यादिनातावन्निश्चिताशनौ ॥ ततःक्रमशोमूलाशनौ ॥ यतात्मानौविषयेभ्योव्यावर्त्तितमनोनेत्रादिज्ञानेंद्रियोनिर्जितेंद्रियग्रामौ ॥ तावज्जितेंद्रियोनस्याद्विजितान्येंद्रियःपुमान् ॥ नजयेद्रसनंयावज्जितंसर्वंजितेरसे ॥ तन्मनस्कौ ॥ तस्यामेवाध्यातुंमनोययोस्तौ तथोक्तौदेवीध्यानपरौ । समाहितौ ॥ गुरूपदिष्टार्थसावधानौ ॥ निरस्तसंशयौ बहुविघ्नपरिहारपरौ ॥ तौसुरथवैश्यौ ॥ निजगात्रासृगुक्षितम् ॥ तपश्चरणकरणकालेपरहिंसापराङ्मुखौईषच्छरीरोद्भवरक्तसिक्तमेवान्नमयंबलिंचददतुः ॥ तुण्डजंबाहुजंवापिरक्तमांसमयंबलिम् ॥ भक्त्यावेशान्महाशूरोमहामायार्थमुत्सृजेत् ॥ चशब्दान्निजशरीरजरुधिरचन्दनविलेपनंचदेव्यैददाते ॥ एतेनशरीरंवापातयामिमंत्रंवासाधयामीतिहठयोगःसूचित ॥ ८ ॥

एवमुक्तप्रकारेणसमाराधयतोस्त्रिभिर्वर्षैःयतात्मनोःदेव्यामवहितचेतसोस्तयोःक्षत्रियवैश्ययोःपरितुष्टा ॥ तत्कृतेनतपसाऽतिप्रीता ॥ जगतांधात्रीचण्डिकादेवीप्रत्यक्षंभूयःप्राहकथयामास प्राहेतिविभक्तिप्रतिरूपकमव्ययम् ॥ यतःचण्डिकाजगद्धात्रीततस्तयोस्तापसयोःप्रत्यक्षीबभूव ॥ अन्यथातत्कृतेनघोरेणतपसाग्निनेवजगंतिदह्येरन्नेवेतिभावः ॥ जगंतिदधातिजगद्धा ॥ आतोनुपसर्गेकः ॥ अदभक्षणेतृन् तृज्वा अत्री संहर्त्री ॥ यद्वा ओहाक्त्यागे ॥ अतोपिके जगंतिजहातिजगद्धा ॥ ततोत्रीभोक्त्री ॥९॥ देव्युवाच । देवीचंडिकाराजानंसुरथंवैश्यंचसमाधिनामानंवाचमूचे यत्प्रार्थ्यतइति हेभूप त्वयायत्प्रार्थ्यते हेकुलनन्दनकुलवर्द्धन वैश्यत्वयायत्प्रार्थ्यतेयाच्यते ॥ तत्वसुसर्वंमत्तःदेवीतःसकाशात्प्राप्यतांलभताम् ॥ अहंपरितुष्टास्मि ॥ तच्चतच्चतेचतेचददामिच ॥ कुलस्यनन्दनःवैश्यःयतोसौकुलात्सकाशाल्लक्ष्मींनग्रहीष्यतिमोक्षकामत्वाद्वैराग्यभाक्त्वादितिभावः॥ द्वितीयार्द्धेप्रार्थ्यतामितितुक्वचित्पाठःसपुनरुक्तः॥

एवंसमाराधयतोस्त्रिभिर्वर्षैर्यतात्मनोः ॥ परितुष्टाजगद्धात्रीप्रत्यक्षंप्राहचंडिका ॥९ ॥ देव्युवाच ॥ यत्प्रार्थ्यतेत्वयाभूपत्वयाचकुलनंदन ॥ मत्तस्तत्प्राप्यतांसर्वंपरितुष्टाददामिवतत् ॥ १० ॥ मार्कंडेयउवाच ॥ ततोववेनृपोराज्यमविभ्रंश्यन्यजन्मनि ॥ अत्रैवचनिजंराज्यंहतशत्रुबलंबलात् ॥११॥ सोपिवैश्यस्ततोज्ञानंववेनिर्विण्णमानसः ॥ ममेत्यहमितिप्राज्ञःसंगविच्युतिकारकम् ॥ १२ ॥

प्राप्यतामितितुपठ्यताम् ॥ यद्वा वैश्यापेक्षयानपौनरुक्त्यम् ॥ त्वयाचप्रार्थ्यतामिति ॥ ददामितत्ददामितेचइतिपाठद्वयंक्वापिदृश्यते ॥ १० ॥ मार्कंडेयमुनिःस्वाशिष्यंततःदेवीतःततःदेव्युक्त्यनन्तरंवानृपःसुरथःअन्यजन्मनिएतज्जन्मापेक्षयाअन्यदग्रिमंभावियज्जन्मतस्मिन् ॥ अविभ्रंशिअचलंराज्यम् ॥ राज्ञोभावःकर्मवाराज्यं ववेप्रार्थयामास ॥ मन्वन्तरत्वरूपम् ॥ अथच । अत्रअस्मिन्नपिजन्मन्यविभ्रंशि ॥ भ्रंशुअधःपतनेणिनिः ॥ नविभ्रंशःअविभ्रंशः तद्युक्तंवा ॥ अत्रैवनिजेनगरेहतशत्रुबलंनिजमात्मीयंराज्यमेवववे प्रार्थयामास ॥ हतंशत्रुबलंयत्रतथोक्तम् ॥ वृञ्वरणे कर्त्तरिलिडात्मनेपदंववे ॥ स्थौल्यसामर्थ्यसैन्येषुबलंनाकाकसीरिणोः ॥ ११ ॥ ततोनन्तरम् ॥ प्राज्ञःमोक्षकांक्षित्वादतितरांबुद्धिमान् ॥ विर्विण्णमानसःसंसारदुःखोद्विग्नचेतस्कः ॥ ससमाधिर्ना



मवैश्योप्यतिविरक्तःसन् ॥ ज्ञानंमोक्षबुद्धिंववे ॥ कीदृशम् ॥ ममेत्यहमिति [illegible] ॥ ममायंपुत्रोहंपिता ममेदंकुलमहंभर्त्ता ममेदंधनमहं

मवैश्योप्यतिविरक्तःसन् ॥ ज्ञानंमोक्षबुद्धिंवव्रे ॥ कीदृशम् ॥ ममेत्यहमित्येवंसंगविच्युतिकारकम् ॥ ममायंपुत्रोहंपिता ममेदंकुलमहंभर्त्ता ममेदंधनमहं स्वामीतस्येत्याद्यध्यासजनितः ॥ यः संगस्तस्यविच्युतिःविलयस्तस्याःकारकंकरणम् ॥ ममत्वंनाममोहःसंसृतिःअहंताचसंसृतिस्तद्विलयकारकंज्ञानमिति भावः ॥ अतस्मिंस्तद्बुद्धिरध्यासः ॥ तेननिःसंगस्यैवात्मनोममत्वमहंत्वंसर्वदुःखावहःसंगःसर्वात्मनाभाव्यते ॥ तस्यसंगस्यपरमात्मरूपब्रह्मज्ञानंविच्युतिका रकंभवति ॥ ममताचाहंताचसंगःसंसर्गेपेक्षाबुद्धिःद्वैतज्ञानंभेदनिबन्धनंतस्यविच्युतिकारकंविच्छेदजनकंमोक्षोपयोगिज्ञानम् ॥ १२ ॥ हेनृपतेहेसुरथ ॥ भवान्स्वल्पैरहोभिःदिवसैःकतिपयैर्वासरैःरिपून्हत्वास्थितवतः अस्खलितमचलितंतवराज्यंभविष्यति ॥ तवराज्यम् ॥ तच्च तत्रेतिपाठद्वयम् ॥ तत्रां तरेराज्यांतरेच ॥ १३ ॥ देव्युवाचहेभूपभवान्मृतःसन्नपिएतच्छरीरंपरित्यक्तवानपिभूयःपुनरपिविवस्वतःसूर्याद्देवात्सवर्णायाश्चतत्पत्न्याःजन्मउत्पत्तिंसंप्राप्य

देव्युवाच॥स्वल्पैरहोभिर्नृपतेस्वंराज्यंप्राप्स्यतेभवान्॥हत्वारिपूनस्खलितंतवतत्रभविष्यति॥१३॥मृतश्चभूयःसंप्राप्यजन्मदेवाद्विवस्वतः॥
सावर्णिकोनाममनुर्भवान्भुविभविष्यति॥१४॥वैश्यवर्यत्वयायश्चवरोस्मत्तोभिवांछितः॥तंप्रयच्छामिसंसिद्ध्यैतवज्ञानंभविष्यति॥१५॥

सावर्णिकोनाममनुःराजाभविष्यति॥सावर्णिरेवसावर्णिकःसंज्ञायांकन् वर्णेनसहितःसवर्णःततःस्त्रीभ्योढकंबाधित्वाबाह्वादिपाठादिञ् सावर्णिःसूर्यतनयोयोम नुःकथ्यतेष्टमः ॥ १४ ॥ हेवैश्यहेवर्य ॥ यद्वा हेवैश्येषुवर्यश्रेष्ठत्वयाअस्मत्तःदेवीतःयःवरःअभिवांछितःअस्ति तंवरंसंसिद्ध्यैपरमात्मरूपसंगत्यैप्रयच्छामि॥तत श्चवरदानतस्तवज्ञानंभविष्यति॥मोक्षधीर्ज्ञानमुच्यते॥अस्मत्तइतिपञ्चमीबहुवचनंतस्मिन्॥अतश्चैकत्वाभावात् प्रत्ययोत्तरपदयोश्चेति मादेशाभावः ॥ ननुच अस्मत्तइतिबहुवचनोपक्रमात्प्रयच्छामइतिबहुवचनेनभाव्यम् ॥ तत्कथंप्रयच्छामीत्येकवचनंस्यात् ॥ एवंतर्हिअस् मत्तः इतिच्छेदः ॥ असुक्षेपणे ॥ अस्यतिक्षिपतिसंसारंनिराकरोति । अस् ॥ क्विपिरूपं वरस्यविशेषणम् ॥ एकत्वात्मादेशः ॥ अयस्मयादित्वात्भत्वात्पदत्वाभावाद्रुत्वाद्यभावः ॥ क्वचित्तु वैश्यवर्यत्वयामत्तोवरोयश्चाभिवांछितइतिवापाठः यद्वा व्यत्ययोबहुलमितिएकवचनस्यबहुवचनम् ॥ ततश्चास्मत्तइत्येवपाठः ॥ वरणार्होवर्यः ॥

क्लीबेप्रधानंप्रमुखप्रवेकानुत्तमोत्तमाः ॥ मुख्यवर्यवरेण्याश्चप्रवर्होऽनवराद्ध्र्यवत् ॥१५॥ मार्कंडेयःमुनिःस्वशिष्यंवाचमूचिवान् हेक्रोष्टुकिमहर्षे ॥ इतिउक्त प्रकारेणतयोःक्षत्रियवैश्ययोःसुरथस्यचसमाधेश्च॥तथाभिलषितमभिवांछितमनतिक्रम्यअभीष्टंवरंदत्त्वा भक्त्यातांभ्यांलब्धवराभ्यामभिष्टुतात्वंजगतांस्रष्ट्री रक्षित्रीसंहर्त्रीजननीत्यभिष्टुतासंस्तुतासतीसद्यःसादेवीभगवतीचण्डिकासपर्यंतार्हिताबभूव ॥ अदृश्याभूत् ॥ १६ ॥ हेक्रोष्टुकिमहर्षेएवंप्रागुक्तप्रकारेणसुरथः क्षत्रियर्षभःश्रेष्ठःक्षत्रियःदेव्याःभगवत्याःसकाशाद्वरंलब्ध्वाप्राप्य ॥ इहराज्यमनुभूय ॥ ततस्तनुंत्यक्त्वा ॥ सवर्णायांसूर्यादेवाज्जन्मसमासाद्यसम्प्राप्यसा वर्णिर्नाममनूराजाभुविभविता ॥ कर्त्तरिभविष्यदनद्यतनेलुट् ॥ भविष्यतीत्यर्थः ॥ मनुरित्ययंसप्तशतिकास्वरूपोमहामालामन्त्रः सर्वेषामधीयतांसर्वकामधु

॥ मार्कंडेयउवाच ॥ इतिदत्त्वातयोर्देवीयथाभिलषितंवरम् ॥ बभूवांतर्हितासद्योभक्त्यातांभ्यामभिष्टुता ॥१६॥ एवंदेव्यावरंलब्ध्वासु रथःक्षत्रियर्षभः ॥ सूर्याज्जन्मसमासाद्यसावर्णिर्भवितामनुः ॥ १७ ॥ इतिश्रीमार्कंडेयपुराणेसावर्णिकेमन्वंतरेदेवीमाहात्म्येत्रयोदशोऽ ध्यायः ॥ १३ ॥ समाप्तंदेवीमाहात्म्यम् ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

गितिसूचियितुमवसानेप्रायोजिभगवताश्रीमार्कंडेयेनेतिसिद्धम् ॥ १७ ॥ संतःसंतुपरप्रयोजनकृतःकल्पद्रुमाभाःसदास्वस्मिन्नेवपथिप्रवर्त्तनपराःसत्कीर्त्तय श्चापरे ॥ अन्येनिस्पृहणाश्रितश्रुतिपथादीर्ष्यंतुभव्याशयाःकोकंतःकलहप्रियाःखलजनाजायंतुजीवंतुते ॥ १ ॥ सत्कृतिबालदिवाकरबिंबंसज्जनमानसराज सरोजम् ॥ संविकसेदभिपश्यदवश्यंनश्यतिदुर्जनवत्कुमुदंतत् ॥ २ ॥ यावद्भूमिमुदित्वरद्युतिमणिश्रेणिस्फुरन्मूर्द्धसु फूत्कारपयोधिकाननगिरिव्रातोल्लस त्सत्फलम् ॥ धत्तेशेषमिवाहिमद्भुतवचास्वस्थीकृताशेषगीस्तावच्छांतनवीतदाजयतुचश्रीचण्डिकादीपिका ॥३॥ इति श्रीमार्कंडेयपुराणेश्रीराजाधिराजतोम रान्वयश्रीमदुद्धरणात्मजशंतनुचक्रवर्त्तिविरचितायांदेवीमाहात्म्यटीकायांदेवीमाहात्म्यंनामत्रयोदशोऽध्यायः॥१३॥समाप्तेयंशांतनवीटीकासप्तशतिकायाः॥



अपरंपुस्तकंवीक्ष्यशोधनीयंसदाबुधैः ॥ हीनाधिकैःस्वरैर्वर्णैरस्मास्कंदूषणंनहि ॥ १ ॥

श्रीगणेशायनमः ॥ श्रीदुर्गादेव्यैनमः ॥ बंधूकबंधूभवदाननाया ... ॥ ... नंदवृंदारकवंदितांघ्रेर्भासःशिवायावयमेवदासाः ॥ १ ॥

श्रीगणेशायनमः ॥ श्रीदुर्गादेव्यैनमः ॥ बंधूकबंधूभवदाननायाभासैवदासीकृतशोणसिंधोः ॥ सानंदवृंदारकवंदितांघ्रेर्भासःशिवायायवयमेवदासाः ॥ १ ॥ तिष्येशिष्यैश्चतुर्भिर्योमुष्यलोकस्यशांतये ॥ अवातततारताशत्मातंवंदेशंकरंगुरुम् ॥ २ ॥ श्रीलक्ष्मींमातरंरंगनाथाख्यंपितरंगुरुम् ॥ काशीनाथश्रीधराख्यौ गुरून्नत्वायथामति ॥ ३ ॥ शैवोपनामकेनैवनीलकंठेनकेनचित् ॥ सप्तशत्यंगषट्कस्यव्याख्यानंतन्यतेमुदा ॥ ४ ॥ तत्रतावद्भगवत्युपासनायांकेचिद्भ्रांतावदंति ॥ मायारूपायाभगवत्याउपासनाशास्त्रेषूक्तातथामायायामिथ्यात्वान्मुक्तौतस्याअनन्वयाच्चाश्रद्धेयेयमुपासनेति ॥ ननुनेयंभ्रांतिः तापनीयेमायावाएषानारसिंही सर्वमिदंसृजतिसर्वमिदंरक्षतिसर्वमिदंसंहरतितस्मान्मायामेतांशक्तिंविद्याद्यएतांमायाशक्तिंवेदसमृत्युंजयतिसपाप्मानंतरतिसोमृतत्वंचगच्छतिमहतींश्रियमश्नुतइतिश्रुतौमायाशक्तिंवेदोपास्तेसमृत्युंजयतीतिकथनेन ॥ तथात्वंवैष्णवीशक्तिरनंतवीर्याविश्वस्यबीजंपरमासिमाया ॥ संमोहितंदेविसमस्तमेतदित्यादिस्मृतिभिःविष्णोःशक्तेर्जडायामायायाएवोपास्यत्वकीर्तनादितिचेन्न ॥ देव्यथर्वशिरसिसर्वेवैदेवादेवीमुपतस्थुः कासित्वंमहादेवि साब्रवीदहंब्रह्मरूपिणीमत्तः प्रकृतिपुरुषात्मकंजगदिति तथाभुवनेश्वर्युपनिषदि अथातोंबोपनिषदंव्याख्यास्यामोथह्येनांब्रह्मरंध्रेब्रह्मस्वरूपिणीमाप्नोतीतितथाभुवनाधीश्वरीतुर्यातीताविश्वविमोहिनीतितथाभावनोपनिषदिस्वात्मैवललितेतिश्रुतिभिः तथात्रिपुरातापनीयसुंदरीतापनीयादिषुपरोरजसेसावदोमितिगायत्रीचतुर्थचरणप्रतिपाद्यब्रह्मवाचकत्वेनह्रींकारबीजस्यकथनेह्रींकारमन्त्रस्यब्रह्मदेवतात्वप्रतिपादकश्रुत्याच तथाकालीतारोपनिषदादिश्रुतिभिस्तथास्मृतिभिश्चब्रह्मरूपिण्याभगवत्याएवोपासनाकथनात् ॥ तथाहिस्मृतयः ॥ सूतसंहितायांपंचमाध्याये ॥ अतःसंसारनाशायसाक्षिणीमात्मरूपिणीम् ॥ आराधयेत्परांशक्तिंप्रपंचोल्लासवर्जितामिति ॥ स्कांदेवेदारण्येश्वरमाहात्म्ये ॥ परातुसच्चिदानंदरूपिणीजगदंबिका ॥ सैवाधिष्ठानरूपास्याज्जगद्भ्रांतेश्चिदात्मनीति ॥ कूर्मपुराणेद्वादशाध्याये ॥ एतत्प्रदर्शितंविप्रादेव्यामाहात्म्यमुत्तमम् ॥ सर्ववेदांतवेदेषुनिश्चितंब्रह्मवादिभिः ॥ एकंसर्वगतंसूक्ष्मंकूटस्थमचलंध्रुवम् ॥ योगिनस्तत्प्रपश्यंतिमहादेव्याःपरंपदमिति ॥

परात्परतरंतत्त्वंशाश्वतंशिवमच्युतम् ॥ अनंतंप्रकृतौलीनंदेव्यास्तत्परमंपदामिति ॥ शुद्धंनिरंजनंशुभ्रंनिर्गुणंदैन्यवर्जितम् ॥ आत्मोपलब्धिविषयंदेव्यास्तत्पर
मंपदमिति ॥ तथाहालास्येश्वरमाहात्म्येमायाबीजार्थप्रस्तावे सत्स्वरूपःसदाकारोहकारोधर्मतत्परः ॥ चिदाकारः शिवाकारोरेफः सर्वार्थसिद्धिदः ॥ आनं
दरूपयोरैक्यादीकारः सर्वकामदः ॥ बिंदुनादौतदंतस्थौभवेतांमोक्षदावुभौ ॥ सच्चिदानंदरूपंतुप्रोक्तंबीजंमनीषिभिः ॥ सच्चिदानन्दरूपंयत्पदंब्रह्मतदेवही
ति ॥ देवीभागवते निर्गुणासगुणाचेतिद्विधाप्रोक्तामनीषिभिः ॥ सगुणारागिभिःसेव्यानिर्गुणातुविरागिभिरिति ॥ ब्रह्मांडपुराणेललितोपाख्याने ॥ चितिस्त
त्पदलक्ष्यार्थाचिदेकरसरूपिणीत्यादयोष्टादशपुराणेषूपपुराणेषुचस्मृतयोद्रष्टव्याः ॥ ननुतर्हिषोडशीग्रहणाग्रहणयोःक्रियाविषयत्वात्तत्रशाखाभेदेनविकल्पसंभ
वेपिवस्तुस्वरूपस्यैकविधत्वात्तत्रविकल्पासंभवेनभगवतीस्वरूपस्यमायास्वरूपत्वप्रतिपादकस्तुत्यासहभगवत्याब्रह्मरूपत्वप्रतिपादकश्रुतेर्विरोधइतिचेन्न ॥ मा
यायावेदांतेषुमिथ्यात्वान्मिथ्यापदार्थस्याधिष्ठानेकल्पितत्वात्तस्याधिष्ठानसत्तातिरिक्तसत्ताभावान्मायायामधिष्ठानसत्ताप्रवेशान्मायास्वरूपोपासनायामपिस
त्तारूपब्रह्मणएवोपासनासंभवतीत्याशयेनमायास्वरूपत्वप्रतिपादनेपिविरोधाभावात् ॥ यथाब्रह्मणउपासनायामपिनकेवलंब्रह्मणोग्रहणं किंतुशक्तिविशिष्टस्यै
वशक्तेस्तदतिरेकेणाभावात् ॥ केवलस्योपासनासंभवाच्च ॥ तथामायोपासनायामपिनकेवलंमायायाअवस्थानमस्ति ॥ येनकेवलायाउपासनंसंभ
वेत् ॥ किंतुब्रह्माधिष्ठानयुतायाएवावस्थानमितिभगवत्यामायारूपत्वप्रतिपादनेपिफलतोब्रह्मस्वरूपमेवभगवत्यासिध्यतीतिश्रुत्योःपरस्परंविरोधाभावात् ॥
तदुक्तम् ॥ पावकस्योष्णतेवेयमुष्णांशोरिवदीधितिः ॥ चंद्रस्यचंद्रिकेवेयंशिवस्यसहजाध्रुवेति ॥ तथा ॥ स्वपदास्वशिरश्छायांयद्वल्लंघितुमीहते ॥
पादोद्देशेशिरोनस्यात्तथेयंबैंदवीकलेति ॥ तथाचयथाग्नौहोमेग्निशक्तौहोमोर्थसिद्धएवमग्निशक्तौहोमेप्यग्नौहोमोर्थसिद्धस्तद्वन्मायायाभगवतीत्वेपिब्रह्मणएवभग
वतीत्वंसिद्धमितितस्यैवोपासनायांग्रहणंमायायामिथ्यात्वप्रतिपादकवाक्येषुतुब्रह्मणोमिथ्यात्वाभावात्केवलमायायाएवग्रहणं तस्यामिथ्यात्वेतदधिष्ठानस्य

सत्यत्वादुपासकस्योपास्यमायापदार्थांतर्गतब्रह्मांशस्यमोक्षदशायामनुस्यूतत्वान्नमुक्तावुपास्यस्वरूपत्यागः ॥ अतएवांतर्यामिब्राह्मणे पृथिव्यादिमायांतानां पदार्थानां यःपृथिव्यांतिष्ठन्यंपृथिवीनवेद यस्यपृथिवीशरीरं यःपृथिवीमंतरोयमयतीत्यादिनांतर्यामिचेतनसंबंधेनैवदेवतात्वमुपवर्णितं तथाचसर्वंखल्विदंब्रह्मेतिश्रुतिरपिअनुगृहीताभवतितत्तदेतत्सर्वमभिप्रेत्यसूतसंहितायामुक्तम् ॥ चिन्मात्राश्रयमायायाःशक्त्याकारेद्विजोतमाः ॥ अनुप्रविष्टायासंविन्निर्विकल्पास्वयंप्रभा ॥ सदाकारासदानंदासंसारोच्छेदकारिणी ॥ साशिवापरमादेवी शिवाभिन्नाशिवंकरीति ॥ यद्वा भगवतीस्वरूपप्रतिपादकवाक्येषुयेमायाशक्तिकलादिशब्दास्ते लक्षणयामायाविशिष्टशक्तिविशिष्टकलाविशिष्टब्रह्मबोधकास्तथाचमायाविशिष्टं शक्तिविशिष्टं कलाविशिष्टंयद्ब्रह्मतद्भगवतीपदवाच्यमितिफलितोर्थः ॥ एतेनक्षुधारूपेण निद्रारूपेणभ्रांतिरूपेणस्मृतिरूपेणेत्यादिकेवलशक्तिवाचकपदानि व्याख्यातानि तैःपदैस्तत्तच्छक्तिविशिष्टब्रह्मणएवसर्वत्रग्रहणात् ॥ अयमेवार्थः कालोत्तरेउक्तः शिवंप्रतिदेवीप्रश्नवाक्येन ॥ भगवन्देवदेवेशमिथ्यामायेति विश्रुता ॥ तस्याः कथमुपास्यत्वंभवेन्मुक्तावनन्वयात् ॥ श्रद्धानजायतेक्वापि मिथ्यावस्तुनिकुत्रचित् ॥ देव्याउपासनाचेयं श्रुतामायाश्रिताप्रभो ॥ संशयंछिंधिदेवेश रहस्यं वदमेप्रभो ॥ इति श्रुत्वावचोदेव्याभगवांश्चंद्रशेखरः ॥ उवाचवचनंदिव्यंलोकानांचाहितप्रदम् ॥ नाहंसुमुखिमायायाउपास्यत्वंब्रुवेक्वचित् ॥ मायाधिष्ठानचैतन्यमुपास्यत्वेन कीर्तितम् ॥ मायाशक्त्यादिशब्दाश्चविशिष्टस्यैवलक्षकाः ॥ तस्मान्मायादिशब्दैस्तुब्रह्मैवोपास्यमुच्यते इति ॥ अत्रपूर्वार्द्धेनमायाधिष्ठानचैतन्येत्यनेनप्रथमपक्षउक्तोमायाशक्त्यादीत्यनेनोत्तरार्द्धेनद्वितीयः पक्षउपपादितः ॥ एतदभिप्रायेणैवब्रह्माण्डपुराणेमायावाचकस्यह्रींकारस्यमायाविशिष्टब्रह्मवाचकत्वमुक्तम् ॥ शक्त्यक्षराणिशेषाणिह्रींकारउभयात्मकइति उभयात्मकः शिवशक्त्यात्मक इत्यर्थः ॥ किंचमायायाः केवलाया उपास्यत्वंवदन्वादीभ्रांतः प्रष्टव्यः ॥ जडायाउपास्यत्वेतत्तद्देवतारूपाणांप्राणेंद्रियमनआत्मजीवादिमत्त्वंकथंभवेत् ॥ द्विविधंहिभगवतीस्वरूपम् ॥ स्थूलंसूक्ष्मंच ॥ तत्रसूक्ष्मंमुख्यं

स्थूलंतुतत्तदुपासकानांदर्शनादिव्यवहारार्थंतत्तदुपासकैरुपासितंसूक्ष्मरूपमेवतुस्थूलंरूपंगृह्णाति ॥ तत्रैवंसतिसूक्ष्मरूपेचैतन्यानुप्रवेशेतद्गृहीतेस्थूलरूपेपि चैतन्यस्याननुप्रवेशेनतत्तद्देवतानांप्राणनसंभाषणादिव्यवहारोच्छेदएवस्यात्तस्मादनिच्छयापिचैतन्यविशिष्टायाएवतत्तच्छक्तेरुपास्यत्वंवक्तव्यमिति ॥ नन्वेवं चेत्किमर्थंमायादिशब्दैर्व्यवहारो भगवत्याः शास्त्रेषुक्रियते लक्षणादिदोषाभावायस्पष्टप्रतिपत्तयेब्रह्मादिशब्दैरेवकुतोन व्यवहारः क्रियतेइतिचेच्छृणु ॥ चतुर्व्यूहात्मकंहिब्रह्मणोरूपं विराड्हिरण्यगर्भाव्याकृतब्रह्मरूपंतत्रदेव्युपासनाव्यूहांतर्गतस्यकस्यपदार्थस्येतिशंकायांविराड्हिरण्यगर्भाव्याकृतानांतदधिष्ठातॄणांब्रह्मविष्णुरुद्राणांचमैत्रायणीयश्रुतावेकैकगुणमयत्वेनकीर्तनाद्गुणत्रयसाम्यावस्थायाः मायायाः प्रकृत्यादिशब्दवाच्यत्वेनतस्याश्चतुरीयब्रह्माश्रितत्वेनतदेवमायाविशिष्टंतुरीयंब्रह्मैवभगवत्युपासनायांग्राह्यमितिबृहदर्थप्रकाशनार्थंतथामायादिशब्दैर्व्यवहारस्यकरणात् ॥ तथाचमैत्रायणीश्रुतिः ॥ तमोवाइदमेकमग्रआसीत्तत्परेस्यात्तत्परेणेरितंविषमत्वंप्रयात्येतद्वैरजस्तद्रजः खल्वीरितंविषमत्वंप्रयात्येतद्वैसत्वस्यरूपमिति ॥ अनेनवाक्येनमायायास्तमःशब्दितायाः परेण ब्रह्मणानित्यसंबंधप्रदर्शनेनजगत्कारणरूपंसाम्यावस्थात्मकंप्रदर्शितंनह्यन्यथातमःप्रेरकत्वंसाम्यावस्थमायोपाधिंविनानिर्गुणस्यपरमात्मनःसंभवतिअग्रेचतस्यैतास्तनवोथयोहखलुवावास्यतामसोंशोसौयोयंरुद्रोयोहखलुवावास्यराजसोंशोसौब्रह्मायोहखलुवावास्यसात्त्विकोंशःसविष्णुरितिगुणत्रयोपाधित्वंब्रह्मविष्णुरुद्राणांप्रतिपादितम् ॥ तथापुराणादिषुच ॥ सत्त्वंरजस्तमइतिप्रकृतेर्गुणास्तैर्युक्तः परः पुरुषएकइहास्यधत्ते ॥ स्थित्यादयोहरिविरिंचिहरेतिसंज्ञाः श्रेयांसि तत्रखलुसत्त्वतनोर्नृणांस्युरित्यादिसर्वपुराणेषुब्रह्मविष्णुरुद्राणामेकैकगुणवत्त्वमेवप्रतिपादितम् ॥ नहिमायाप्रकृतिशक्त्यादिशब्दवाच्यंवस्तुब्रह्मातिरिक्ताश्रयंभवति येनमायादिशब्दैरुपास्यंवस्तुमायाविशिष्टब्रह्मातिरिक्तंभवेत्किंतुमायाविशिष्टब्रह्मरूपमेवेतितैः शब्दैरुपास्यवस्तुनिप्रतिपादिते मायाविशिष्टब्रह्मरूपमेवभग

वतीरूपमुपास्यंभवेदितिबोधनार्थमेवमायादिशब्दैर्भगवत्याउपासनकथनमिति ननुतर्हित्वंवैष्णवीशक्तिरनंतवीर्येत्यत्रापिमायाशब्दोब्रह्मविशिष्टमायावाचकः स्यात् ॥ नचेष्टापत्तिः ॥ तत्रकेवलायामायायाएवविवक्षितत्वादितिचेन्न ॥ नह्यस्माभिःसर्वत्रमायाशक्त्यादिशब्देनमायाविशिष्टंशक्तिविशिष्टंब्रह्मैवसर्वत्रग्राह्यमितिशपथःक्रियते येनातिप्रसंगःस्यात्किंतुक्वचित्संबंधिशब्दसमभिव्याहारेकेवलमायाया एवग्रहणंयथात्रैवतथानाशप्रकरणेकेवलमायायाग्रहणंतथासृष्टिस्थलेपि मन्मायाशक्तिसंक्लृप्तंजगत्सर्वंचराचरम् ॥ सापिमत्तःपृथग्विप्रानास्त्येवपरमार्थतः ॥ इत्यादौकेवलमायायाग्रहणमुपासनास्थलेतुतद्विशिष्टब्रह्मणोग्रहणमितियथायथमूह्यम् ॥ तथाचत्वंवैष्णवीशक्तिरित्यादौअधिष्ठानकूटस्थब्रह्मरूपिणीयात्वंसावैष्णवीयामायाशक्तिरस्तितद्रूपाअसीत्यर्थः ॥ ब्रह्मणःसर्वाधिष्ठानत्वेनसर्वरूपत्वात् ॥ तेनचब्रह्मरूपत्वमेवभगवत्याः प्रतिपादितमेवमन्यत्राप्यूह्यम् ॥ यद्वा ब्रह्मणोजगत्कारणस्योभयात्मकत्वात्क्वचिन्मायोपसर्जनब्रह्मणउपासनं तत्रशक्तिःसहायभूता ॥ इदंचमतं शिवपुराणादिषुस्पष्टम् ॥ तस्मात्सहतयादेवंहृदिपश्यंतियेशिवम् ॥ तेषांशाश्वतिकाशांतिर्नेतरेषांकदाचनेति वचनानिचयैः । क्वचिच्चब्रह्मोपसर्जनमायाया उपासनंतत्रभगवतीविषयेब्रह्मोपसर्जनमायायाएवोपासनमितिदर्शयितुंमायाशक्त्यादिशब्दैः शास्त्रेभगवत्याव्यवहारः क्रियते । इदंचमतंसर्वतंत्राभिमतंपुराणाभिमतंच ॥ शिवेनसहितांदेवींभावयेद्भुवनेश्वरीमितिभुवनेश्वरीपारिजातादिवचननिचयात् ॥ तदुक्तंकूर्मपुराणे ॥ अस्यास्त्वनादिसंसिद्धमैश्वर्यमतुलंमहत् ॥ तत्संबंधादनंतैषारुद्रेणपरमात्मनेत्यादीनिवचनानिदेवीभागवतादिसर्वपुराणेषुद्रष्टव्यानि ॥ उभयपक्षेपिब्रह्मणश्चिदंशउपासनायामागतएवेतिनमुक्तावुपास्यस्वरूपानन्वयित्वरूपंदूषणंनवाश्रद्धेयतेति ॥ इत्थं भगवत्युपासनायांस्वरूपेनिर्णीते ब्रह्मविष्णुरुद्रशक्त्युपासनासुकस्योपासनावरिष्ठेत्यस्यविचारः क्रियते ॥ तत्रसर्वंखल्विदंब्रह्मेतिसामानाधिकरण्येनसर्वपदार्थमात्रस्यब्रह्मरूपत्वेपिभक्तानांचेतसोवलंबायपरमेश्वरेणमलिनशुद्धशुद्धतरशुद्धतमाविभूतयः शुद्धितारतम्येनकल्पितास्ताश्चगीतादिशास्त्रेषुविभूत्यध्यायेछांदोग्यादिषुचप्राणोब्रह्मादित्योब्रह्ममनोब्रह्मेत्यादि

वाक्यैः प्रदर्शिताः ॥ तत्रसर्वविभूतिषुब्रह्मणः समानत्वेनावस्थानेपियथापात्रमणिकृपाणदर्पणादिषुशुद्धितारतम्येनप्रतिबिंबफलनस्यापितारतम्यमेवंविभूति
षुशुद्धितारतम्येनैवब्रह्मणः प्रसादकरणतारतम्यंप्रतिबिंबफलनतारतम्यंचेतियाभिर्याभिर्विभूतिभिर्यथायथाप्रतिबिंबफलनतारतम्यंप्रसादकरणतारतम्यंचभ
वतितथातथातस्याविभूतेरुत्कृष्टत्वमुत्कृष्टतरत्वमुत्कृष्टतमत्वमित्यादिव्यवहारः सर्वशास्त्रप्रसिद्धोनिर्विवादस्तथाचसतिब्रह्मविष्णुरुद्राणामेकैकगुणोपाधित्वे
नैकैकगुणापेक्षयासाम्यावस्थायास्तमःसत्वादिगुणमूलभूतायाः सर्वोत्कृष्टत्वात् ॥ किंचप्रथमतोब्रह्मणिमायातस्याःब्रह्मणोऽव्यवहितःसंबंधस्तदुत्तरंगु
णानामुद्भवान्मायाद्वारकःसंबंधोगुणानामितिसाम्यावस्थायामव्यवहितःसंबंधोब्रह्मणइति सैवोपासनामुख्यासर्वोत्कृष्टाचेति॥ सूतसंहितादिष्वपीयंरीतिरुक्ता॥
परतत्त्वप्रकाशस्तुरुद्रस्यैवमहत्तरः॥ ब्रह्मविष्ण्वादिदेवानांनतथामुनिपुंगवाः इत्यादि॥ रुद्रः कथंचित्कायार्थंमनुतेरुद्ररूपताम् ॥ नतथादेवताःसर्वाःपरिस्फू
र्त्यल्पताबलादिति ॥ सूतगीतासु ॥ ननुब्रह्मविष्णुरुद्राणामैकैकगुणोपाधित्वेसर्वसंमतेकथंसाम्यावस्थात्मकत्वेनापितेषांपुराणादिषूपवर्णनमितिचेन्न ॥ तदंत
र्गतब्रह्मणएवसाम्यावस्थात्मकत्वेनतदभेदात्तेषामपितदात्मकत्वकथनमित्याशयात् अतएवतापनीयेनृसिंहस्यसत्वोपहितविष्णोरवतारत्वेश्रुतिपुराणादिनिश्चि
तेपिसाम्यावस्थात्मकत्वेनवर्णनंसंगच्छते॥ तस्मान्मायाशक्त्याख्यब्रह्मरूपभगवत्युपासनैवमुख्यासर्वोत्कृष्टाचेतिसैवसर्वकामार्थिभिर्मुमुक्षुभिश्चोत्कृष्टवस्तूपास
नेच्छुभिराश्रयणीयेत्यर्थात्प्राप्तमपिपुराणांतरवचनैः स्पष्टमुपपाद्यंते ॥ देवीभागवते ॥ ब्रह्मविद्याजगद्धात्रीसर्वेषांजननीतथा ॥ ययासर्वमिदंव्याप्तंत्रैलोक्यं
सचराचरम् ॥सैवसेव्याचपूज्याचनान्यद्वैदेवतांतरमिति॥ तथातंत्रेषु॥ एवंयःपूजयेद्भक्त्याप्रत्यहंपरमेश्वरीम् ॥भुक्त्वाभोगान्यथाकामंदेवीसायुज्यमाप्नुयात् ॥
योनपूजयतेनित्यंचण्डिकांभक्तवत्सलाम् ॥ भस्मीकृत्यास्यपुण्यानिनिर्दहेत्परमेश्वरीति॥ अनेनवचनेनभगवत्युपासनायाःसंध्यादिकर्मवन्नित्यत्वंनित्यपदोचा
रणेनस्पष्टमेव बोधितंस्पष्टीकृतंचैतदस्माभिर्देवीभागवतटीकायाम् ॥ तथापुराणांतरे ॥ आराध्यापरमाशक्तिः सर्वैरपिसुरासुरैः ॥ नातःपरतरंकिंचिदधिकं

भुवनत्रयेइति ॥ तथा ॐकारंपितृरूपेणगायत्रींमातरंतथा ॥ पितरौयोनजानातिसविप्रस्त्वन्यरेतजः ॥ तथाकालोत्तरे ॥ धिग्धिग्धिग्धिक्चतज्जन्मयो
नपूजयतेशिवाम् ॥ जननींसर्वजगतःकरुणारससागरामित्यादिपुराणेषुतंत्रेषुचबहूनिवचनानिद्रष्टव्यानि ॥ विस्तरस्तुमत्कृतशक्तितत्त्वविमर्शिन्यांद्रष्टव्यः ॥
इत्थंशक्तितत्वस्यसर्वोत्कृष्टस्यसर्वैरुपास्यस्योपासनाप्रकाराअधिकारिभेदेनानेकविधाःपूजास्तोत्रजपध्यानलयरूपाः॥ तदुक्तंभुवनेश्वरीसंहितायाम् ॥ पूजाको
टिसमंस्तोत्रंस्तोत्रकोटिसमोजपः॥जपकोटिसमंध्यानंध्यानकोटिसमोलयइति॥पूजाचतुःषष्टिसंख्योपचारषोडशोपचारपंचोपचारभेदेनत्रिधा॥मंत्राश्चमायाबी
जादयोबीजरूपाः गायत्र्यादयोऋग्रूपास्तदतिरिक्ताश्चनवार्णप्रभृतयोवैदिकाः देव्यथर्वशिरसिभुवनेश्वरीतापनीयादिषुप्रसिद्धास्तैत्तिरीयशाखायांच ह्रीश्चतेल
क्ष्मीश्चपत्न्याविितिकंठरवेणैवोपात्तास्तांत्रिकाश्चचतुःषष्ठितंत्रेषुप्रसिद्धाएवध्यानलयादयश्चतंत्रेषुयोगशास्त्रेषुश्वेताश्वतराद्युपनिषत्सुच ॥ तेध्यानयोगानुगता
अपश्यन्देवात्मशक्तिंस्वगुणैर्निगूढामित्यादिवाक्यैःप्रतिपादितास्तोत्राणिचसप्तशत्यादीनिमार्कंडेयपुराणादिषुप्रसिद्धानि तत्रस्तोत्रेषुस्तोत्रद्वयमेवमुख्यंसप्तशती
रूपंकूर्मपुराणांतर्गतंदेवीसहस्रनामाख्यंच तंत्रेषुबहुधैतयोर्मुख्यत्त्वप्रतिपादनात् ॥ स्तोत्रद्वयेपिसप्तशत्याख्यमेवमुख्यंसर्वेषांश्लोकानांमंत्ररूपत्वाच्चतुःषष्टितंत्रे
ष्वपितस्यैवमुख्यत्वेनप्रतिपादितत्वाच्च ॥ उक्तंचवेदागमे॥ निर्विशेषपरामंत्राः सविशेषपराश्चये॥प्रत्यध्यायंनिरूढास्तेतेनेयंसर्वतःपरेति॥रुद्रयामलेच॥ अस्ति
गुह्यतमंदेव्यामाहात्म्यंसर्वसिद्धिदम् ॥वाक्यैरर्थैश्चपद्यैश्चसप्तशत्याःशुभप्रदम्॥सविशेषपरंसाक्षाच्चिच्छक्तिमहिमाश्रयम् ॥ तात्पर्यगत्यातत्कृत्स्नंनिर्विशेषचिदा
श्रयमिति ॥ तदुक्तंकात्यायनीतंत्रे॥ अंगहीनोयथादेहीसर्वकर्मसुनक्षमः ॥ अंगषट्कविहीनातुतथासप्तशतीस्तुतिः ॥ तस्मादेतत्पठित्वैवजपेत्सप्तशतींपराम् ॥
अन्यथाशापमाप्नोतिहानिंचैवपदेपदे ॥ रावणाद्यास्तोत्रमेतदंगहीनंनिषेविरे ॥ हतारामेणतेयस्मान्नांगहीनंपठेत्ततइति ॥ तद्यथामतिव्याख्यायते ॥
तत्रकवचांशेब्रह्माणंप्रतिप्रश्नंकरोतिमार्कंडेयः ॥ यद्गुह्यमिति ॥ लोकेयत्परममुत्कृष्टंगुह्यमस्तिरहस्यमस्तितन्मेब्रूहितिकिंब्रह्मरूपंनेत्याह ॥ सर्वरक्षाकरं

येनसर्वेषामपिरक्षाभवतिनृणांपामरप्रभृतीनामपितादृशमित्यर्थः ॥ ब्रह्मतूत्तमाधिकारिणामेवरक्षकंनसर्वेषामित्यर्थः ॥ ननुसंत्यन्यानिकवचानिलोकेइतिचे त्सत्यं संति तथापियद्भवताकस्यचित्कस्यापिनाख्यातंनिधिबुद्ध्यास्थापितमस्तितदित्यर्थः ॥ तेनचनिःसंशयमेवरक्षणंझटितिस्यादितिभावः ॥ अन्यथानि धिबुद्ध्यातस्यरक्षणंनिरर्थकंस्यादिति ॥ ननुकिमित्युत्कृष्टंवस्तुमयादेयमितिचेत्तत्राह हेपितामहस्वसंततिरक्षणार्थंपितामहेनावश्यंदेयमित्यर्थः ॥ १ ॥ उत्तर माह ॥ ब्रह्मोवाच ॥ अस्तीति ॥ हेविप्रत्वयायत्पृष्टंतादृशंदेव्यास्तुदेव्याएवकवचंपुण्यमेकंनिधिबुद्ध्यास्थापितमस्तितन्महामुनेश्रृणुष्व ॥ सर्वभूतोपका रार्थंप्रवृत्तत्वान्महामुनेइतिसंबोधनम् ॥ २ ॥ परंतुसादेवीनवमूर्त्यात्मिकाध्येयेत्यभिप्रायेणतासांमूर्तीनांनामान्याह ॥ प्रथममिति ॥ नामज्ञानेनतद्वाच्याकार स्यप्रसिद्धत्वादेवज्ञानंभविष्यतीतिभावः ॥ सर्वोत्तरैश्वर्यवत्यपिभगवतीशैलेनभक्तेनातितपश्चर्यया प्रार्थितासतीकारुण्यवशादतिनीचमपिपुत्रीत्वंस्वीकृतवतीत्य

॥/मार्कंडेयउवाच ॥ यद्गुह्यंपरमंलोकेसर्वरक्षाकरंनृणाम् ॥ यन्नकस्यचिदाख्यातंतन्मेब्रूहिपितामह ॥१॥ ॥ ब्रह्मोवाच ॥ ॥ अस्तिगु ह्यतमंविप्रसर्वभूतोपकारकम् ॥ देव्यास्तुकवचंपुण्यंतच्छृणुष्वमहामुने ॥ २॥ प्रथमंशैलपुत्रीतिद्वितीयंब्रह्मचारिणी ॥ तृतीयंचंद्रघंटेति कूष्मांडेतिचतुर्थकम् ॥ ३ ॥

होभक्तवात्सल्यंकियद्वर्णनीयंभगवत्याइतितत्त्वंकूर्मपुराणेस्पष्टमेतत् ॥ ब्रह्मचारिणीति ॥ ब्रह्मसच्चिदानंदरूपंतच्चारयितुंप्रापयितुंशीलंयस्याः साब्रह्मचारिणीब्रह्म रूपप्रदेत्यर्थः॥ चंद्रघंटेति॥ चंद्रोहस्तगतायांघंटायांयस्याश्चंद्रवन्निर्मलावाघंटायस्याःसेत्यर्थः ॥ यद्वा आह्लादकारिणीदेवीचंद्रघंटेतिकीर्तितेतिरहस्यागमोक्ते श्चंद्रंघंटयतिप्रदिवादितयाभाषतेस्वस्याह्लादकारित्वाभिमानेनेतिचंद्रघंटाचंद्रापेक्षयाप्यतिलीलावतीत्यर्थः ॥ पटपुटेतिदंडकपठितस्यचुरादेर्घटिधातोर्भाषा र्थस्यपचाद्यचिरूपं चंद्रस्यघंटाचंद्रघंटा ॥ कूष्मांडेति ॥ कुत्सितऊष्मासंतापस्तापत्रयरूपोयस्मिन्संसारेससंसारःकूष्मा सोंडेमांसपेश्यामुदररूपायांयस्याः साकूष्मांडातापत्रययुक्तसंसारभक्षणकर्त्रीत्यर्थः ॥ अंडःपेशीचमुष्कंचेतिमेदिनी ॥ ३ ॥

स्कंदेति ॥ सनत्कुमारस्यभगवतीवीर्याद्गुद्भूतस्यस्कंदइतिसंज्ञाभगवान्सनत्कुमारस्तंस्कंदइत्याचक्षतेइतिछांदोग्यश्रुतेस्तथाचज्ञातिभिर्यदुदरेजन्माभिलषणीयमित्यतिशुद्धेत्यर्थः॥कात्यायनीति।देवकार्यार्थंकात्यायनाश्रमेआविर्भूतातेनकन्यात्वेनस्वीकृतेतिकात्यायनीतिनामभगवत्याः ॥ अस्यानिरंतरंकुमारीत्वेनपत्यनधीनतयास्वतंत्रत्वंबोधितम् ॥ कालरात्रीति ॥ सर्वमारकस्यकालस्यापिरात्रिर्नाशिकेत्यर्थः।प्रलयेकालस्यापिनाशात् ॥ कृदिकारादक्तिनइतिङीष् ॥ महागौरीति ॥ इयं चमहामानिनीनर्मोक्त्याशिवेनकालीत्युक्तेतपसागौरवर्णस्यसंपादितत्वात्कालीपुराणेस्पष्टमेतत् ॥ ४ ॥ सिद्धिदेति ॥ इतीतिशेषः॥ सिद्धिदाइतिनवमामित्यन्वयः ॥ मोक्षदेत्यर्थः ॥ नवदुर्गाइति ॥ योगिनःकायव्यूहवदेकस्याएवदुर्गायाएतेतवभेदायेशास्त्रेध्येयत्वेनप्रोक्तास्तेमयाकीर्तिताइत्यर्थः ॥ अतएव

पंचमंस्कंदमातेतिषष्ठंकात्यायनीतिच ॥ सप्तमंकालरात्रीतिमहागौरीतिचाष्टमम् ॥ ४ ॥ नवमंसिद्धिदाप्रोक्तानवदुर्गाःप्रकीर्त्तिताः ॥ उक्तान्येतानिनामानिब्रह्मणैवमहात्मना ॥ ५ ॥ अग्निनादह्यमानस्तुशत्रुमध्येगतोरणे ॥ विषमेदुर्गमेचैवभयार्त्ताःशरणंगताः ॥ ६ ॥ नतेषांजायतेकिंचिदशुभंरणसंकटे ॥ नापदंतस्यपश्यामिशोकदुःखभयंनहि ॥ ७ ॥

देव्यास्तुकवचंपुण्यमित्येकवचनंसंगच्छते ॥ नाम्नांस्वकल्पितत्वशंकाव्युदासार्थमाह ॥ उक्तान्येतानीति ॥ महात्मनासर्वज्ञेनब्रह्मणैववेदैर्नैवैतान्युक्तानीत्यर्थः ॥ ५ ॥ इत्थंकवचपाठेध्येयदेवतास्वरूपंगुणंचप्रदर्श्यतत्फलेअविश्वासोनैवकर्तव्यइतिकैमुतिकन्यायेनाह ॥ अग्निनेति ॥ योग्निनादह्यमानोरणेशत्रुमध्येचगतः सन्शरणंगतइतिशेषः ॥ अथयेविषमेदुर्गमेचातिसंकटेभयार्त्ताः भयपीडिताः संतःशरणंगताः ॥ ६ ॥ तेषांतस्यचभक्तिरहितेनस्मरणमात्रेणापितज्जन्यंभयादिकंनभवतीत्याह ॥ तत्तेषामिति ॥ ७ ॥

यैस्तुभक्त्यास्मृताभवतितेषांपूर्वोक्तंफलमृद्धिधर्मार्थकाममोक्षाणांचभवतीत्यत्रकिंवक्तव्यमित्याह ॥ यैस्त्विवति ॥ इदानींदेव्याअतिवात्सल्यंभक्त्युत्पादनार्थं दर्शयति ॥ प्रेतसंस्थेतिश्लोकद्वयेन ॥ ८ ॥ ९ ॥ ब्राह्मीत्यंतंसप्तमातॄणांवर्णनम् ॥ नानेतिवक्ष्यमाणदेवीनांवर्णनम् ॥ १० ॥ दृश्यंतेइति ॥ सप्तमातृभिन्नाःयाश्चदेव्यस्ताअपिभक्तरक्षणार्थंक्रोधसमाकुलाः रथमारूढाः जात्यैकवचनं रथानारूढादृश्यंतेअर्थाद्देवादिभिरितिबोध्यम् ॥ तासामायुधान्याह ॥ शंखमितिसार्धेन ॥ ११ ॥ १२ ॥ दैत्यानामिति ॥ ताःसप्तमातरश्चशंखंचक्रमित्यादिश्लोकोक्तानीत्थमायुधानिधारयंति ॥ किमर्थम् ॥ दैत्यानां

यैस्तुभक्त्यास्मृतानूनंतेषामृद्धिःप्रजायते ॥ प्रेतसंस्थातुचामुंडावाराहीमहिषासना ॥ ८ ॥ ऐंद्रीगजसमारूढावैष्णवीगरुडासना ॥ माहेश्वरीवृषारूढाकौमारीशिखिवाहना ॥ ९ ॥ ब्राह्मीहंससमारूढासर्वाभरणभूषिता ॥ नानाभरणशोभाढ्यानानारत्नोपशोभिताः ॥ १० ॥ दृश्यंतेरथमारूढादेव्यःक्रोधसमाकुलाः ॥ शंखंचक्रंगदांशक्तिंहलंचमुसलायुधम् ॥ ११ ॥ खेटकंतोमरंचैवपरशुंपाशमेवच ॥ कुंतायुधंत्रिशूलंचशार्ङ्गायुधमनुत्तमम् ॥ १२ ॥ दैत्यानांदेहनाशायभक्तानामभयायच ॥ धारयंत्यायुधानीत्थंदेवानांचहितायवै ॥ १३ ॥ महाबलेमहोत्साहेमहाभयविनाशिनि ॥ त्राहिमांदेविदुष्प्रेक्ष्येशत्रूणांभयवर्द्धिनि ॥ १४ ॥

देहनाशार्थंभक्ताभयार्थंदेवहितार्थंचेत्यर्थः ॥ अयंभावः ॥ अप्रार्थिताअपिएतामहत्योदेवताजगद्रक्षणेवत्सलतयैवप्रवृत्तामातृवत्ताः कुतोनमंदभाग्येनस्वरक्षणार्थंप्रार्थ्यंतेइति ॥ १३ ॥ कवचपाठस्यादाविमंप्रार्थनामंत्रंपठित्वापश्चात्कवचंपठनीयमित्यभिप्रायेणाह ॥ महाबलेइति ॥ महद्बलंमायाशक्तिरूपंयस्याः महानुत्साहोजगद्रक्षणेयस्याः महाभयंमृत्युरूपंतस्यज्ञानदानेननाशिनी । दुष्प्रेक्ष्येदुर्दर्शनीयेनसंदृशेतिष्ठतिरूपमस्येतिश्रुतेः । शत्रूणांकामक्रोधादिकानाम् ॥ १४ ॥

प्राच्यामिति ॥ प्राच्यांदिशिस्थिताऐंद्रीइंद्रशक्तिर्मांरक्षत्वित्यन्वयः ॥ प्राच्यांस्थितंमामितिवाएवमुत्तरत्रापि॥शक्तिशक्तिमतोरभेदादग्निरूपादेवताअग्निशक्तिरित्यर्थः । अत्ररक्षत्वित्यनुवृत्तिः ॥ वरान् श्रेष्ठानप्याहंतिसवराहो यमः आर्षःप्रयोगः तस्यशक्तिर्वाराही अण्णंतान्ङीप्॥यमशक्तिरित्यर्थः॥दशदिक्पालप्रकरणात् ॥ सप्तमात्रंतर्गतावावाराहीहेवाराहिदक्षिणेदेशेस्थितात्वंमांरक्षेत्यर्थः ॥ स्थितंमामिति ॥ खड्गधारिणीनिर्ऋतिशक्तिरित्यर्थः ॥ रक्षत्वित्यस्यमध्येमध्येविच्छेदादध्याहारः कर्तव्यः ॥ १५ ॥ मृगवाहिनीवायुदेवतायामृगवाहनत्वाद्वायुशक्तिरित्यर्थः ॥ रक्षेदित्यनुवृत्तिः ॥ कुत्सितः मारःमदःयस्यसः

प्राच्यांरक्षतुमामैंद्रीआग्नेय्यामग्निदेवता ॥ दक्षिणेरक्षवाराहिनैर्ऋत्यांखड्गधारिणी ॥ १५ ॥ प्रतीच्यांवारुणीरक्षेद्वायव्यांमृगवाहिनी ॥ उदीच्यांरक्षकौमारीईशान्यांशूलधारिणी ॥ १६ ॥ ऊर्ध्वंब्रह्माणिमेरक्षेदधस्ताद्वैष्णवीतथा ॥ एवंदशदिशोरक्षेच्चामुंडाशववाहना॥ १७॥ जयामेचाग्रतःस्थातुविजयास्थातुपृष्ठतः ॥ अजितावामपार्श्वेतुदक्षिणेचापराजिता ॥ १८ ॥

कुमारःकुबेरस्तस्येयंशक्तिःकौमारी दिक्पालप्रकरणात् ॥ यद्यपिकौबेर्यारक्षणस्थानमग्रेवक्ष्यमाणमस्तितथाप्येकस्याएवस्थानद्वयरक्षकत्वेबाधकाभावः ॥ सप्तमात्रंतर्गतावा ॥ शूलधारिणीशानशक्तिरित्यर्थः ॥ १६ ॥ ऊर्ध्वमिति ॥ ब्रह्माणमानयतिजीवयतीतिकर्मण्यण् ॥ हेब्रह्माणिऊर्ध्वंस्थिताभवतीमेमांरक्षेदित्यर्थः ॥ मेऊर्ध्वंभागमितिवा ॥ एवमिति ॥ दिक्पालदेवतावदेवमेमत्संबंधिनीर्दशदिशश्चामुंडारक्षेदित्यर्थः ॥ दशदिक्षुस्थिताचामुंडामांरक्षेदितिपर्यवसितोर्थः ॥ अन्यथाकेवलदिशांरक्षणेप्रयोजनाभावः ॥ १७ ॥ जयाशक्तिःस्थातुतिष्ठतुमत्संरक्षणार्थम् आर्षःप्रयोगः ॥ १८ ॥

शिखामिति ॥ उद्योतिनीनामिकादेवीममशिखायांस्थितासतीमच्छिखांरक्षेदितिसर्वत्रयोज्यम् ॥ उमामूर्ध्निव्यवस्थितासतीमूर्धानंरक्षेदित्यर्थः ॥ एवंसर्वत्रयथायोग्यमध्याहार्यम् ॥ १९ ॥ नासिकेनासापुटेत्यर्थः ॥ उत्तरत्रनासिकाशब्देननासिकादंडइति ॥ २० ॥ २१ ॥ अधरेअधरोष्ठेत्यर्थः ॥ २२ ॥ ॥ २३ ॥ कंठस्यबहिर्भागोबहिष्कंठः ॥ नलिकांकंठनालम् ॥ २४ ॥ स्कंधमारभ्यकूर्परपर्यंतोभागोबाहुस्तदारभ्यांगुलिपर्यंतोभागोहस्तः ॥ २५ ॥

शिखामुद्योतिनीरक्षेदुमामूर्ध्निव्यवस्थिता ॥ मालाधरीललाटेचभ्रुवौरक्षेद्यशस्विनी ॥ १९ ॥ त्रिनेत्राचभ्रुवोर्मध्येयमघंटाचनासिके ॥ शंखिनीचक्षुषोर्मध्येश्रोत्रयोर्द्वारवासिनी ॥२०॥ कपोलौकालिकारक्षेत्कर्णमूलेतुशांकरी ॥ नासिकायांसुगंधाचउत्तरोष्ठेचचर्चिका॥२१॥ अधरेचामृतकलाजिह्वायांचसरस्वती ॥ दंतान्रक्षतुकौमारीकंठदेशेतुचंडिका ॥२२॥ घंटिकाचित्रघंटाचमहामायाचतालुके ॥ कामाक्षी चिबुकंरक्षेद्वाचंमेसर्वमंगला ॥ २३ ॥ ग्रीवायांभद्रकालीचपृष्ठवंशेधनुर्धरी ॥ नीलग्रीवाबहिःकंठेनलिकांनलकूबरी ॥ २४ ॥ खड्गधारिण्युभौस्कंधौबाहूमेवज्रधारिणी ॥ हस्तयोर्दंडिनीरक्षेदंबिकाचांगुलीषुच ॥ २५ ॥ नखाञ्छूलेश्वरीरक्षेत्कुक्षौरक्षेन्नलेश्वरी ॥ स्तनौरक्षेन्महादेवीमनःशोकविनाशिनी ॥ २६ ॥ हृदयंललितादेवीह्युदरंशूलधारिणी ॥ नाभिंचकामिनीरक्षेद्गुह्यंगुह्येश्वरीतथा ॥ २७ ॥ भूतनाथाचमेढ्रंचऊरूमहिषवाहिनी ॥ कट्यांभगवतीरक्षेज्जानुनीविंध्यवासिनी ॥ २८ ॥



कुक्षावितिसतम्यंतःपाठःप्राचीनसंमतः ॥ २६ ॥ २७ ॥ मेढ्रंलिंगम् ॥ मेढ्रोमेहनशेफसीतिकोशः ॥ गुदंमहिषवाहिनीत्यपपाठः ॥ ऊरूमहिषवाहिनीतिपाठःसम्यक् ॥ गुह्यंगुह्येश्वरीतिपूर्वोक्तविरोधात् जानुस्थानात्पूर्वमूरुस्थानस्यैवसत्त्वाच ॥ २८ ॥

प्रोक्तागमादिशास्त्रेषुयामहाबलासेत्यर्थः ॥ २९ ...

प्रोक्तागमादिशास्त्रेषुयामहाबलासेत्यर्थः ॥ २९ ॥ पादाधःइतिभिन्नंपदम् ॥ तलवासिनीपातालतलवासिनीत्यर्थः ॥ यद्यपिनखाञ्छूलेश्वरीरक्षेदित्यत्रनखरक्षणमुक्तंतथापियथैकस्याअपिदेवतायाःस्थानद्वयरक्षकत्वंनविरुध्यते तथैवदेवताद्वयस्यैकस्थाननिरूपितरक्षकत्वेबाधकाभावइत्यभिप्रायेणनखान् दंष्ट्राकरालीचेत्युक्तम् ॥ ३० ॥ ३१ ॥ पद्मकोशेपद्महृदयादिरूपमेवकोशोवासस्थानंयस्यश्वासस्यतस्मिन्वातेस्थितासतीतंरक्षतुइतियावत्इतिकेचित् ॥ अग्रेप्राणानांरक्षणकथनात्पद्मकोशप्रतीकाशंहृदयंचाप्यधोमुखमितिश्रुत्युक्तंहृदयमेवपद्मकोशशब्देनग्राह्यमित्यपरे ॥ आंत्राणि अम्धातोःक्रेऽनुनासिकस्य

जंघेमहाबलाप्रोक्ताजानुमध्येविनायकी ॥ गुल्फयोर्नारसिंहीचपादपृष्ठेमितौजसी ॥ २९ ॥ पादांगुलीःश्रीधरीचपादाधस्तलवासिनी ॥ नखान्दंष्ट्राकरालीचकेशांश्चैवोर्द्ध्वकेशिनी ॥ ३० ॥ रोमकूपानिकौबेरीत्वचंवागीश्वरीतथा ॥ रक्तमज्जावसामांसान्यस्थिमेदांसिपार्वती ॥ ॥ ३१ ॥ आंत्राणिकालरात्रिश्चपित्तंचमुकुटेश्वरी ॥ पद्मावतीपद्मकोशेकफेचूडामणिस्तथा ॥ ३२ ॥ ज्वालामुखीनखज्वालामभेद्यासर्वसंधिषु॥शुक्रंब्रह्माणिरक्षेच्चच्छायांछत्रेश्वरीतथा ॥३३॥ अहंकारंमनोबुद्धिंरक्षमेधर्मचारिणि ॥ प्राणापानौतथाव्यानमुदानंचसमानकम् ॥ ॥ ३४ ॥ यशःकीर्त्तिंचलक्ष्मींचसदारक्षतुचक्रिणी ॥ गोत्रमिंद्राणिमेरक्षेत्पशून्मेरक्षचंडिके ॥ ३५ ॥

कीतिदीर्घः॥ चूडामणिनाम्नीदेवतारक्तासुरवधेप्रसिद्धा ॥ ३२ ॥ नखज्वालांनखनिष्ठंतेजः ॥ अभेद्यानाम्नीसर्वसंधिषुस्थितासतीसर्वसंधीन्रक्षेदित्यर्थः ॥ हे ब्रह्माणिभवतीमेशुक्रंरक्षेदित्यर्थः॥ ३३ ॥ हेधर्मचारिणिअत्रत्वमित्यध्याहारः रक्षेतिमध्यमपुरुषात् ॥ ३४ ॥ यशःकीर्तिमिति ॥ अत्रयद्यपियशःकीर्तिःसमज्ञाचेत्यमरोक्तेर्यशःकीर्तिशब्दौएकार्थप्रतिपादकौ तथापि॥ सजीवतियशोयस्यकीर्तिर्यस्यसजीवति॥ यशःकीर्तिपरिभ्रष्टोजीवबद्धोनजीवति ॥ इत्यादिप्रयोगानुरोधात् ॥ दानादिप्रभवाकीर्तिः शौर्यादिप्रभवंयशः इतिभेदः॥ केचित्तुस्वल्पदेशव्याप्तंयशः बहुदेशव्यापिकाकीर्तिरिति॥ हेइन्द्राणिभवतीत्यध्याहारः॥ ३५ ॥

॥ ३६ ॥ रक्षेदिति ॥ यत्स्थानंरक्षयाहीनं कुतइतिचेत्कवचेनतुविवर्जितम् ॥ कवचेतस्यस्थानस्योहोनकृतः ॥ तत्सर्वंरक्षमेदेवियतस्त्वंजयंतीसर्वोत्कृष्टापापनाशिनीभवसि ॥ ३७ ॥ अथपितामहः फलस्तुतिंवक्तुमधिकारिणंप्रथममुपदिशति ॥ पदमेकमिति ॥ यदिशुभमात्मनइच्छेत्तर्हिसपुरुषः कवचेनरहितः एकंपदमपिनगच्छेदितिक्षणमात्रमपिदेवीस्मरणंविनानक्षपणीयमितितात्पर्यम् ॥ तदुक्तंपुराणेषु ॥ स्वपंस्तिष्ठन्व्रजन्मार्गेप्रलपन् भोजनेरतः ॥ कीर्तये

पुत्रान्रक्षेन्महालक्ष्मीर्भार्यांरक्षतुभैरवी ॥ मार्गंक्षेमकरीरक्षेद्विजयासर्वतःस्थिता ॥ ३६॥ रक्षाहीनंतुयत्स्थानंकवचेनविवर्जितम् ॥ तत्सर्वं रक्षमेदेवीजयंतीपापनाशिनी ॥ ३७ ॥ पदमेकंनगच्छेत्तुयदीच्छेच्छुभमात्मनः ॥ कवचेनावृतोनित्यंयत्रयत्रहिगच्छति॥३८॥तत्रतत्रार्थलाभश्चविजयःसार्वकामिकः ॥ यंयंकामयतेकामंतंतंप्राप्नोतिनिश्चितम् ॥ ३९ ॥ परमैश्वर्यमतुलंप्राप्स्यतेभूतलेपुनः ॥ निर्भयोजायते मर्त्यःसंग्रामेष्वपराजितः ॥ ४० ॥ त्रैलोक्येतुभवेत्पूज्यःकवचेनावृतःपुमान् ॥ इदंतुदेव्याःकवचंदेवानामपिदुर्लभम् ॥ ४१ ॥ यःपठेत्प्रयतोनित्यंत्रिसंध्यंश्रद्धयान्वितः ॥ दैवीकलाभवेत्तस्यत्रैलोक्येचापराजितः ॥ ४२ ॥ जीवेद्वर्षशतंसाग्रमपमृत्युविवर्जितः ॥ नश्यंतिव्याधयःसर्वेलूताविस्फोटकादयः ॥ ४३ ॥ स्थावरंजंगमंवापिकृत्रिमंचापियद्विषम् ॥ अभिचाराणिसर्वाणिमंत्रयंत्राणिभूतले ॥ ४४ ॥ भूचराःखेचराश्चैवजलजाश्चौपदेशिकाः ॥ सहजाःकुलजामालाडाकिनीशाकिनीतथा ॥ ४५ ॥

त्सततंदेवींसवैमुच्येतबंधनात् इति ॥ इत्युपदिश्यफलंकथयति ॥ कवचेनेत्यादिना ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ दैवीकलाचित्कला ॥ ४२ ॥ ४३ ॥ स्थावरंवत्सनाभादि ॥ जंगमंसर्पादि ॥ कृत्रिमंपरस्परयोगजन्यम् ॥ यथातुल्यपरिमाणयोर्मधुसर्पिषोर्योगादिजम् ॥ अभिचाराणिपरकृतानि ॥ ४४ ॥ कुलजादयोदुष्टदेवताजातिभेदाः ॥ औपदेशिकाः उपदेशेनतन्मात्रेणयेसिध्यंतितेक्षुद्रदेवताभेदाः ॥ ४५ ॥

॥ ४६ ॥ ४७ ॥ राज्ञःसकाशादित्यर्थः ॥ ४८ ॥ अधुनासप्तशत्यंगत्वंकवचस्याविधत्ते ॥ जपेदिति ॥ पुराप्रथमतः ॥ अनंतनागोयावद्भूमंडलंधत्तेधारयतितावदित्यर्थः॥४९॥परमंस्थानंमोक्षरूपंज्ञानद्वाराप्राप्नोतिनियमेन ॥ ५० ॥ महामायासर्वकारणंमायाशबलंब्रह्मतस्याः प्रसादतः ॥ यमेवैषवृणुतेतेनलभ्यस्तस्यैषआत्माविवृणुतेतनुंस्वामितिश्रुतेः ॥ यएतांमायाशक्तिंवेदसमृत्युंजयतिसपाप्मानंतरतिसोमृतत्वंचगच्छतीतिश्रुतेः ॥ अहमेवस्वयमिदंवदामिजुष्टंदेवेभिरुतमानुषेभिरितिश्रुतेश्च॥ पार्वतीपरमाविद्याब्रह्मविद्याप्रदायिनी॥विशेषेणैवजंतूनांनात्रसंदेहकारणमितिसूतसंहितोक्तेश्च ॥कवचेस्मिन्सार्धपंचाशत्संख्याश्लोकसंग्रहःइतिवाराहीतंत्रे॥स्पष्टंचेदंगुप्तवत्यामुपोद्घाते ॥ आधिक्यन्यूनतादोषपरिहारजिहीर्षया॥देवीनाम्नांक्रमस्यापिकथनंक्रियतेमया ॥तेचश्लोकाः

अंतरिक्षचराघोराडाकिन्यश्चमहाबलाः ॥ ग्रहभूतपिशाचाश्चयक्षगंधर्वराक्षसाः ॥ ४६ ॥ ब्रह्मराक्षसवेतालाःकूष्मांडाभैरवादयः ॥ नश्यंतिदर्शनात्तस्यकवचेहृदिसंस्थिते ॥ ४७ ॥ मानोन्नतिर्भवेद्राज्ञस्तेजोवृद्धिकरंपरम् ॥ यशसावर्धतेसोपिकीर्त्तिमंडितभूतले ॥ ४८॥ जपेत्सप्तशतींचंडींकृत्वातुकवचंपुरा ॥ यावद्भूमंडलंधत्तेसशैलवनकाननम् ॥ ४९ ॥ तावत्तिष्ठतिमेदिन्यांसंततिःपुत्रपौत्रिकी ॥ देहांतेपरमंस्थानंयत्सुरैरपिदुर्लभम् ॥ ५० ॥ प्राप्नोतिपुरुषोनित्यंमहामायाप्रसादतः ॥ इतितंत्रोक्तंदेव्याःकवचम् ॥ १ ॥ ॥ ॥

प्राचीनग्रंथस्थाःसांप्रदायिकाएवलिख्यंते ॥ दशदिक्पालदेव्यश्चचामुंडाचततःपरम् ॥ जयाचविजयाचैवाप्यजिताचापराजिता ॥ १ ॥ उद्योतिनीततश्चोमामालाधारीयशस्विनी ॥ त्रिनेत्रायमघंटाचशंखिनीद्वारवासिनी॥ २॥कालिकाशांकरीपश्चात्सुगंधाचर्चिकातथा ॥ अमृतादिकलापश्चात्ततःस्यात्तुसरस्वती ॥ ३ ॥ कौमारीचंडिकाचित्रघंटामायामहादिका॥कामाक्ष्यनंतरंसर्वमंगलाभद्रकालिका॥ ४॥धनुर्धरीनीलग्रीवाततःस्यान्नलकूबरी ॥खड्गधारिणिकापूर्वंवज्रधारिण्यनंतरम् ॥ ५ ॥ दंडिनीचांबिकाशूलेशानीस्यात्तुबलेश्वरी ॥मनःशोकविनाशास्याल्ललिताशूलधारिणी ॥६॥ कामिनीगुह्यपूर्वास्यादीश्वरीचततः

परम् ॥ भूतनाथाततः स्यात्तुमहामहिषवाहिनी ॥ ७ ॥ भगवत्यपिविंध्यस्थामहापूर्वाबलातथा ॥ विनायकीनारसिंहीततःपश्चान्मितौजसी ॥ ८ ॥ श्रीध यंतेचपातालवासिन्यंतेकरालिनी ॥ ऊर्ध्वकेशीचकौबेरीवागीशीपार्वतीतथा ॥९॥ कालरात्रिश्चमुकुटेशानीपद्मावतीतथा ॥ चूडामणिस्तथाज्वालामुख्य भैयाततःस्मृता ॥ १० ॥ ब्रह्माणीछत्रपूर्वास्यादीश्वरीधर्मचारिणी॥ चक्रिणींद्रवधूश्चंडीमहालक्ष्मीश्चभैरवी ॥११॥ क्षेमंपूर्वाकरीपश्चाद्विजयाचजयंतिका॥ इत्येताः सम्यगाख्याताः कवचस्थाश्चशक्तयः ॥ १२ ॥ इति श्रीशैवोपनामकरंगभट्टसुतलक्ष्मीगर्भजनीलकंठभट्टकृतंसप्तशत्यंगकवचविवरणंसमाप्तम् ॥ १ ॥

॥अथार्गलाव्याख्यानम् ॥तत्रप्रथमतोदेवताया ध्यानोपयोगिगुणानाह ॥ जयंतीति ॥ जयंतीसर्वोत्कृष्टेत्यर्थः ॥ गुणत्रयसाम्यावस्थोपाधिकब्रह्मरूपिण्याभग वत्याः सर्वकारणत्वात् ॥ मंगलामंगंजननमरणादिरूपंसर्पणंलातिगृह्णातिनाशयतिसामोक्षप्रदामंगलेत्युच्यते । नतस्यप्राणाउत्क्रामंति इतिश्रुतेः ॥ कलयति

मार्कंडेयउवाच ॥ जयंतीमंगलाकालीभद्रकालीकपालिनी ॥ दुर्गाक्षमाशिवाधात्रीस्वाहास्वधानमोस्तुते ॥ १ ॥

भक्षयंतिसर्वमेतत्प्रलयकालेइतिकाली ॥ ब्रह्मक्षत्रंचोभेभवतओदनोमृत्युर्यस्योपसेचनमितिश्रुतेः ॥ भद्रंमंगलंसुखंकलयतिस्वीकरोतिभक्तेभ्योदातुमितिभद्र काली॥भद्रकालीसुखप्रदेतिरहस्यागमेर्थकथनात्कपालोस्त्रीशिरोस्थिनस्याद्घटादेः शकलेंबुजेइतिमेदिनीकोशाद्ब्रह्मादीन्निहत्यतेषांकपालंगृहीत्वाप्रलयकालेअ टतीतिकपालिनी ॥ प्रपंचरूपांबुजंहस्तेयस्याइतिवा ॥ कपालिनीमत्वर्थीयइनिः ॥ प्रपंचांबुजहस्ताचकपालिन्युच्यतेपरेतिरहस्यागमे ॥ दुःखेनाष्टांगयो गसर्वकर्मोपासनारूपेणक्लेशेनगम्यतेप्राप्यतेसादुर्गा ॥ तांदुर्गांदुर्गमांदेवींदुराचारविघातिनीमितिदेव्यथर्वशिरसि ॥ क्षमाभक्तानामन्येषांवासर्वानपराधान्क्ष मतेसहतेजननीत्वात्सातिशयकारुण्यवतीक्षमेत्युच्यते ॥ शिवाचिद्रूपिणीत्यर्थः ॥ चिन्मात्राश्रयमायायाःशक्त्याकारेद्विजोत्तमाः ॥ अनुप्रविष्टायासंवि न्निर्विकल्पास्वयंप्रभा ॥ सदाकारासदानंदासंसारोच्छेदकारिणी ॥ साशिवापरमादेवीशिवाभिन्नाशिवंकरीतिसूतसंहितोक्तेः॥ धात्रीसर्वप्रपंचधारणकर्त्री ॥



अहंरुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुतविश्वदेवैः ॥ [illegible] ॥ स्वाहादेवपोषिणी ॥ स्वधापि

अहंरुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुतविश्वदेवैः ॥ अहंमित्रावरुणोभाबिभर्म्यहमिंद्राग्नीअहमश्विनोभाइत्यादिश्रुतेः ॥ स्वाहादेवपोषिणी ॥ स्वधापि तृपोषिणी ॥ एतादृशपूर्वोक्तमहागुणवतीयात्वमसितितस्तेतुभ्यंनमोनमस्कारएवास्तुकेवलं नतुतादृश्याःपरिचर्यायाःसामर्थ्यमस्तीतिभावः ॥ १ ॥ मध्विति ॥ मधुकैटभयोर्विद्राविणीनाशिनीचसाविधातुर्वरदाचेत्यर्थः ॥ मधुकैटभनाशार्थंब्रह्मणास्तुतासतीतस्मैवरंददावितिकथादेवीभागवतेप्रथमस्कंधे प्रसिद्धा ॥ रूप्यतेज्ञायतेइतिरूपंपरमात्मवस्तु ॥ रूपंभवेद्विंदुरमंदकांतिरित्यागमात् ॥ तद्देहिमह्यम् ॥ यत्कृतनमस्कारेणैवप्रसन्नासतीतथाजयंजयत्यनेनपर मात्मनःस्वरूपमिति ॥ जयोवेदस्मृतिराशिस्ततोजयमुदीरयेदित्यत्रप्रसिद्धः ॥ तंदेहियशोदेहि ॥ सहनौयशइतिश्रुतिप्रसिद्धं तत्वज्ञानसंपादनजन्यंयशः ॥

मधुकैटभविद्राविविधातृवरदेनमः ॥ रूपंदेहिजयंदेहियशोदेहिद्विषोजहि ॥२॥ महिषासुरनिर्नाशिविधात्रिवरदेनमः ॥ रूपंदेहि० ॥ ३ ॥ वंदितांघ्रियुगेदेविदेविसौभाग्यदायिनि ॥ रूपं० ॥ ४ ॥ रक्तबीजवधेदेविचंडमुंडविनाशिनि ॥ रूपं० ॥ ५ ॥ अचिंत्यरूपचरिते सर्वशत्रुविनाशिनि ॥ रूपं० ॥ ६ ॥ नतेभ्यःसर्वदाभक्त्याचंडिकेप्रणतायमे ॥ रूपं० ॥ ७ ॥

तद्देहि ॥ द्विषःकामक्रोधादिशत्रून् जहिनाशय ॥ २ ॥ महिषेति ॥ महिषासुरस्यनिर्नाशस्तस्यविधात्रीकर्त्रीत्यर्थः ॥ वरदेइतिपृथक्पदम् ॥ ३ ॥ वंदितेति ॥ ब्रह्मविष्ण्वादिभिर्वंदितमंघ्रियुगंयस्यास्तेषामेतदपेक्षयान्यूनोपाधिकत्वात् ॥ भक्त्यतिशयेनदेवीत्यस्यपुनरावृत्तिः ॥ ४ ॥ रक्तेति ॥ रक्तबीजस्यवधः कर्तव्यतयाअस्तियस्याः सा ॥ अर्शआद्यजंतम् ॥ रक्तबीजवधकर्त्रीत्यर्थः ॥ रक्तबीजस्यवधोयस्याःसकाशादितिवा ॥ अत्रनिशुंभशुंभेतिश्लोकपाठोऽपपा ठः ॥ प्राचीनैरव्याख्यानात् ॥ प्राचीनपुस्तकेष्वपाठाच्च ॥ ५ ॥ अचिंत्येति ॥ यतोवाचोनिवर्तंतइतिश्रुतेः ॥ योअस्याध्यक्षः परमेव्योमन्त्सोंगवेदयदिवा नवेदेतिश्रुतेः ॥ ६ ॥ नेति ॥ सदासर्वदाभक्त्यानतेभ्यःप्रणतेभ्योमेप्रणतायचरूपंदेहीत्यन्वयः ॥ ७ ॥

 

॥ ८ ॥ येत्वांमर्चयंतितेभ्यइतिशेषः ॥ ९ ॥ सौभाग्यंदेहि ॥ अर्थान्मह्यम् ॥ १० ॥ विधेहीतिउच्चकैःअतिशयेनोच्चंबलंममविधेहि ॥ ११ ॥ १२ ॥ विद्यावंतमिति ॥ ब्रह्मविद्यावंतंजनंस्वभक्तंकुरुअथचरूपंदेहीत्यर्थः ॥ १३ ॥ १४ ॥ १५ ॥ कृष्णेनेति ॥ इयंकथादेवीभागवतेप्रसिद्धा ॥ १६ ॥ हिमाचलसुतानाथःशिवस्तेनपूजिते ॥ १७ ॥ सुरेति ॥ अनेनचदेवीस्वरूपदर्शनेननिर्वैरता अद्वैतभावश्चभवतीतिध्वनितम् सुरासुरयोःसामानाधिकरण्यकथ

स्तुवद्भ्योभक्तिपूर्वंत्वांचंडिकेव्याधिनाशिनि ॥ रूपं० ॥ ८ ॥ चंडिकेसततंयेत्वामर्चयंतीहभक्तितः ॥ रूपं० ॥ ९ ॥ देहिसौभाग्यमारोग्यं देहिदेविपरंसुखम् ॥ रूपं० ॥ १० ॥ विधेहिद्विषतांनाशंविधेहिबलमुच्चकैः ॥ रूपं० ॥ ११ ॥ विधेहिदेविकल्याणंविधेहिविपुलांश्रियम् ॥ रूपं० ॥ १२ ॥ विद्यावंतंयशस्वंतंलक्ष्मीवंतंजनंकुरु ॥ रूपं० ॥ १३ ॥ प्रचंडदैत्यदर्पघ्नेचंडिकेप्रणतायमे ॥ रूपं० ॥ १४ ॥ चतुर्भुजे चतुर्वक्त्रसंस्तुतेपरमेश्वरि ॥ रूपं० ॥ १५ ॥ कृष्णेनसंस्तुतेदेविशश्वद्भक्त्यात्वमंबिके ॥ रूपं० ॥ १६ ॥ हिमाचलसुतानाथपूजितेपरमेश्वरि ॥ रूपं० ॥ १७ ॥ सुरासुरशिरोरत्ननिघृष्टचरणेंबिके ॥ रूपं० ॥ १८ ॥ इंद्राणीपतिसद्भावपूजितेपरमेश्वरि ॥ रूपं० ॥ १९ ॥ देवि प्रचंडदोर्दंडदैत्यदर्पविनाशिनि ॥ रूपं० ॥ २० ॥ देविभक्तजनोद्दामदत्तानंदोदयेंबिके ॥ रूपं ॥ २१ ॥ पत्नींमनोरमांदेहिमनोवृत्तानुसारिणीम् ॥ तारिणींदुर्गसंसारसागरस्यकुलोद्भवाम् ॥ २२ ॥

नात् ॥ १८ ॥ इंद्राणीति ॥ इंद्राणीपतिनासद्भावेनपूजिते ॥ १९ ॥ २० ॥ भक्तजनेषुयेउद्दामास्तेभ्योदत्तआनंदोदयोमोक्षोयया ॥ २१ ॥ तारिणीं ॥ मार्कंडेयपुराणप्रसिद्धयामदालसयावावासिष्ठरामायणप्रसिद्धयाचूडालयाचतुल्याम् ॥ आद्ययापुत्रस्तारितोद्वितीययापतिरेवतारितइतितत्राख्यानात् ॥ २२ ॥ 

महास्तोत्रंसप्तशत्याख्यम् अनेनचार्गलास्तुतेरपिसप्तशत्यांगत्वं... पठित्वासप्तशतीस्तोत्रंजपतिसतुसएवसप्तशत्याः संख्यासम्यक्कथनंत

मार्कंडेयपुराणप्रसिद्धयामदालसयावासिष्ठरामायणप्रसिद्धयाचूडालयाचतुल्याम् ॥ आद्ययापुत्रस्तारिताद्वितीययापतिरवतारितइतितत्राख्यानात् ॥ २२ ॥



महास्तोत्रंसप्तशत्याख्यम् अनेनचार्गलास्तुतेरपिसप्तशत्यंगत्वंबोधितम् ॥ यएवमर्गलास्तुतिंपठित्वासप्तशतीस्तोत्रंजपतिसतुसएवसप्तशत्याः संख्यासम्यक्कथनंत यायज्जायमानंवरंफलंतत्प्राप्नोतिनान्यःसंपदश्चप्राप्नोतितस्मादवश्यमर्गलास्तोत्रंपठनीयमितिभावः ॥ सिद्धिप्रतिबंधकंपापमर्गलासदृशत्वादर्गला तन्नाशकस्तो त्रस्यापिलक्षणयार्गलेतिसंज्ञा ॥ २३ ॥ त्रयोविंशतिसंख्यानांश्लोकानामत्रसंग्रहः ॥ अत्रापिमूलंवाराहीतंत्रमेव ॥ इति श्रीशैवोपनामकरंगनाथभट्ट सुतलक्ष्मीगर्भजनीलकंठभट्टकृतमर्गलाविवरणंसमाप्तम् ॥२॥ अथकीलकविवरणम् ॥ तत्रमार्कंडेयऋषिः शिष्यानुपदिदेश ससंवादस्तंत्रेषुकथितइतितंत्रस्थ मेवैतत् ॥ ऋषिरुवाच ॥ मार्कंडेयऋषिःस्वशिष्यान्प्रतीत्यर्थात् ॥ कीलकंवक्तुंमंगलमाचरतिमार्कंडेयः ॥ विशुद्धेति ॥ निर्मलज्ञानरूपायेत्यर्थः ॥ त्रिवे दीवेदत्रयरूपंदिव्यंचक्षुर्यस्यतस्मैश्रेयःप्राप्तेःकल्याणप्राप्तेर्निमितायसोमार्धधारिणेनमोस्त्वित्यर्थः ॥ अत्रकेचिदयंश्लोकस्तर्कचरणमीमांसावार्तिकप्रथमोत्रापि

इदंस्तोत्रंजपित्वातुमहास्तोत्रंपठेन्नरः ॥ सतुसप्तशतीसंख्यावरमाप्नोतिसंपदः ॥ २३ ॥ इति अर्गलास्तुतिः ॥ २ ॥ ॥ ऋषिरुवाच ॥
विशुद्धज्ञानदेहायत्रिवेदीदिव्यचक्षुषे ॥ श्रेयःप्राप्तिनिमित्तायनमःसोमार्धधारिणे ॥ १ ॥ सर्वमेतद्विनायस्तुमंत्राणामभिकीलकम् ॥ सोपि
क्षेममवाप्नोतिसततंजाप्यतत्परः ॥ २ ॥

बहुभिः पठ्यतेपरंतुअनार्षइत्याहुः ॥ वयंतुब्रूमोत्रत्यएवसश्लोकोमंगलार्थंवार्तिककारैर्गृहीतइतिकुतोनस्यात्नहिकुत्रचित्स्थितःश्लोकोमंगलार्थमन्यत्रन गृहीतव्यइतिराजाज्ञास्ति तस्मात्सर्वपुस्तकेषुउपलंभादार्षएवश्लोकइति ॥ १ ॥ किमुवाचतदाह ॥ सर्वमिति ॥ मंत्राणांसर्वेषामभिकीलकंवक्ष्यमाणरीत्या सर्वमंत्रसिद्धिप्रतिबंधकशापरूपकीलकनाशकत्वाल्लक्षणयासप्तशतीस्तोत्रमभिकीलकंतत्सर्वंविजानीयादुपासीतेत्यर्थः ॥ नन्वन्यमंत्रोपासनाभिः किंक्षेमंन भवतियतोत्रैवाग्रहःक्रियतेइतिचेद्भवत्येवेत्याह ॥ सोपीति ॥ तत्सप्तशतीस्तोत्रंविनासततंजाप्यतत्परः नानामंत्राणांजपरूपेकर्मणिनिरंतरंनिष्ठायस्यसः तत्परो यस्तुपुरुषःसोपिक्षेमंसर्वंकल्याणंप्राप्नोतीत्यर्थः ॥ २ ॥

एवंजपतत्परस्यपुरुषस्योच्चाटनादीन्यपिकर्माणिसिध्यंतितथासकलानिवस्तून्यलभ्यानिसिध्यंति ॥ एवंसप्तशतीपाठरहितानामपिपुरुषाणांकेवलमंत्रजपेन सिद्धिमुक्त्वामंत्रजपरहितानामपिपुरुषाणांकेवलसप्तशतीपाठेनापिसर्वसिद्धिमुपादिशति ॥ एतेनेति॥ एतेनप्रकृतेनस्तोत्रमात्रेणसप्तशत्याख्यस्तोत्रपाठमात्रेणस्तुवतांस्तोतॄणांदेवीभगवतीसच्चिदानंदरूपिणीसिद्ध्यातिप्रसीदति ॥ ३ ॥ अस्यपुरुषस्यनान्यमंत्राद्युपयोगइत्याह ॥ नमंत्रइति ॥ तत्रतस्यपुरुषस्यकार्यसिद्धौ नमंत्रउपयुक्तोभवतितथानौषधंतथानकिंचिदन्यदपियोगसिध्यादिरूपंसाधनंविद्यतेउपयोगाय किंतुजाप्येनविनातत्तन्मंत्रजपरूपकर्माभावेपिसर्वमुच्चाटनादिकमाभिचारिकंकर्मतथासमग्राण्यप्यभिलषणीयानिकार्याणिसिध्यंति ॥ केवलस्तोत्रमात्रेणेति ॥ एतावत्पर्यंतंसप्तशत्युपासनयाकेवलयासर्वकल्याणंभवति

सिद्ध्यंत्युच्चाटनादीनिवस्तूनिसकलान्यपि ॥ एतेनस्तुवतांदेवीस्तोत्रमंत्रेणसिद्ध्यति ॥ ३ ॥ नमंत्रोनौषधंतत्रनकिंचिदपिविद्यते ॥
विनाजाप्येनसिध्येतसर्वमुच्चाटनादिकम् ॥ ४ ॥ समग्राण्यपिसिद्ध्यंतिलोकशंकामिमांहरः ॥ कृत्वानिमंत्रयामाससर्वमेवमिदंशुभम् ॥
॥ ५ ॥ स्तोत्रंवैचंडिकायास्तुतच्चगुह्यंचकारसः ॥ समाप्तिर्नचपुण्यस्यतांयथावन्नियंत्रणाम् ॥ ६ ॥

तथासप्तशत्यन्यमन्त्रोपासनयापिसर्वकल्याणंभवतीतिपक्षद्वयमुपपादितम् ॥४॥ इत्थंपक्षद्वयमपीदमस्तीतियापक्षद्वयविषयिणीलोकानांशंकातांहरः प्रथमतः कृत्वातच्छंकानिरासार्थंनिमंत्रयामासानिमंत्रितवानर्थाल्लोकांस्तानागतानाह किमिति वक्ष्यमाणप्रकारेणेदंसप्तशत्याख्यमेवशुभमिति॥अत्रतानाहेतिशेषः॥५॥ अनंतरंचंडिकायास्तुचंडिकायाएवस्तोत्रंसप्तशत्याख्यंतच्चगुह्यमतिरहस्यंचकार॥पूर्वोक्तमंत्रजपरूपपक्षापेक्षयाद्वितीयंपक्षमेवसारभूतंचकारेत्यर्थः॥इतिमार्कंडेयेनतंत्रोक्तंपूर्ववृत्तंकथितं पुनःशिष्यान्सप्तशतीमाहात्म्यंकथयन् शिवाभिप्रायंकथयति॥यस्मादेतत्स्तोत्रपाठजन्यफलस्यनसमाप्तिःकदापिभवतितत्तन्मंत्रजपजन्यपुण्यस्यतुसमाप्तिरस्तितस्मात्तांपूर्वोक्तांशिवेनकृतांनियन्त्रणांप्रथमपक्षस्यसंकोचरूपांयथावद्यथार्थमेवजानीध्वमितिशेषः ॥ ६ ॥





सोपीति ॥ सोपितत्तन्मंत्रजपकर्तापिएतत्स्तोत्रजपसहितश्चेदेवसर्वक्षममेवामितितस्मात्तत्प्रथमपक्षंविहायसप्तशतीपाठेएवसर्वैरादरःकर्त्तव्यइत्यर्थः एतेनान्ये

सोपीति ॥ सोपितत्तन्मंत्रजपकर्तापिएतत्स्तोत्रजपसहितश्चेदेवसर्वंक्षेममवाप्नोतितस्मात्तंप्रथमपक्षंविहायसप्तशतीपाठेएवसर्वैरादरःकर्त्तव्यइत्यर्थः एतेनान्ये
मन्त्राअपिसप्तशतीपाठंकृत्वैवजपनीयाः अन्यथातत्तन्मंत्रफलप्राप्तिर्नस्यादितिबोधितम् ॥ यतएतत्सर्वमन्त्रसिद्धिप्रतिबंधकनाशकंभवति॥तस्मादेवमंत्राणाम
भिकीलकमेतदितिपूर्वमुक्तमितिबोध्यम् ॥ अभिकीलकंसिद्धिप्रतिष्टंभकरंदोषरूपंतन्नाशकत्वादस्यापिलक्षणयाअभिकीलकत्वम् ॥ नन्वत्रापिनवार्णमन्त्रज
पापेक्षास्त्येवेतिचेत्साशीघ्रफलार्थमितिब्रूमोनतुतद्विनाफलमेतस्यनास्तीति ॥ एतद्विनातुतत्तन्मंत्राणांफलमेवनभवतीतिविशेषः ॥ परंतुहेशिष्याःतत्स्तोत्रंसर्वे
षामप्यचिंत्यफलप्रदंजातमितिसर्वेपिसर्वेश्वराभविष्यंतीतिज्ञात्वामहादेवेनकीलितमस्तीत्याह ॥ कृष्णायामिति ॥ कृष्णचतुर्दश्यामष्टम्यांवाकृष्णायांसमाहि
तः एकाग्रःसन् ॥ ७ ॥ यउपासकोनिजंसर्वंधनंन्यायेनार्जितंदेव्यैददातिसमर्पयति ॥ हेदेविइतआरभ्येदंसर्वंमदीयंधनंतुभ्यंमयादत्तमास्तिइतिसमर्पयतिपश्चा

सोपिक्षेममवाप्नोतिसर्वमेवनसंशयः ॥ कृष्णायांवाचतुर्दश्यामष्टम्यांवासमाहितः ॥ ७ ॥ ददातिप्रतिगृह्णातिनान्यथैषाप्रसीदति ॥ इत्थं
रूपेणकीलेनमहादेवेनकीलितम्॥ ८ ॥ योनिःकीलांविधायैनांनित्यंजपतिसंस्फुटम् ॥ ससिद्धःसगणःसोपिगंधर्वोजायतेवने ॥ ९ ॥

त्संसारयात्रानिर्वाहार्थंगृहाणेदंद्रव्यंमत्प्रसादभूतमितिदेव्याअनुज्ञांमनसागृहीत्वातद्द्रव्यंप्रसादबुद्ध्याप्रतिगृह्णातिगृहीत्वाधर्मशास्त्रोक्तमार्गेणतस्यव्ययंकुर्वन्निरंत
रंदेव्यधीनोभवतितस्यैषासप्तशतीप्रसन्नाभवतिनान्यथा इत्थंरूपेणकीलेनसिद्धिप्रतिष्टंभकरेणरूपेणमहादेवेनकीलितमास्ते ॥ अयंचकीलकस्यार्थोरहस्याम्ना
येगुरुकीलकपटलेप्रदर्शितः ॥ अग्रेस्पष्टीकरिष्यामः ॥ ८ ॥ तर्हिकिंकर्तव्यंतत्राह ॥ यइति ॥ यस्मादेवंतस्माद्योहिपुरुषएतांसप्तशतींपूर्वोक्तदानप्रति
ग्रहकरणेननिकीलांविधायस्फुटंयथास्यात्तथासंजपतिसएवसिद्धोभवतिसएवदेव्यागणोभवतिसोपिसएवावनेसर्वजगद्रक्षणेगंधर्वः ॥ बृहदारण्यके तस्यासीद्दुहि
तागंधर्वगृहीतेतिश्रुत्युक्तोदेवताविशेषोगंधर्वोजायतेसहिसमर्थःसर्वजगद्रक्षणेइति ॥ ९ ॥

दृष्टफलान्याह ॥ नेति ॥ १० ॥ एतादृशंकीलकमज्ञात्वापाठकर्तुर्दोषमाह ॥ ज्ञात्वेति ॥ पूर्वोक्तंकीलकंज्ञात्वातत्परिहारंप्रारभ्यपाठंकुर्वीततत्परिहारमकुर्वाणो विनश्यति ॥ यस्मादेवंतस्मात्कीलकं ज्ञात्वैवसंपन्नंनिर्दुष्टमिदंस्तोत्रंबुधैः प्रारभ्यते ॥ अत्रविनाशकथनंकीलकज्ञानस्यावश्यकत्वार्थमेव ॥ यथाकथंचित्पाठस्यापिवचनांतरैरनुज्ञानात् ॥ ११ ॥ तेनतेनहेतुनाजाप्यमित्यर्थः ॥ १२ ॥ शनैस्त्विति ॥ शनैः स्वकर्णागोचरंयथास्यात्तथापाठेयत्किंचित्संपत्तिरेवभवति ॥ उच्चकैः उच्चैः पाठेतुसमग्रापिभवत्येव ॥ ततउच्चकैरेवैतत्प्रारभ्यमित्यर्थः ॥ १३ ॥ इत्थंमुनिः कीलकविधिंसमाप्यजनानाक्रोशति ॥ ऐश्वर्यमिति ॥ परोमोक्षः कैवल्यमोक्षः अहोमंदभाग्याएतेदृष्टिगोचरं चिंतामणिंकामदुघांभगवतींविहायस्वकल्याणार्थंवराटिकाम

नचैवाप्यटतस्तस्यभयंक्वापीहजायते॥ नाल्पमृत्युवशंयातिमृतोवामोक्षमाप्नुयात् ॥१०॥ ज्ञात्वाप्रारभ्यकुर्वीतह्यकुर्वाणोविनश्यति ॥ ततोज्ञात्वैवसंपन्नमिदंप्रारभ्यतेबुधैः ॥ ११ ॥ सौभाग्यादिचयत्किंचिद्दृश्यतेललनाजने ॥ तत्सर्वंतत्प्रसादेनतेनजाप्यमिदंशुभम् ॥ १२ ॥ शनैस्तुजाप्यमानेस्मिन्स्तोत्रेसंपत्तिरुच्चकैः॥भवत्येवसमग्रापिततःप्रारभ्यमेवतत् ॥ १३॥ऐश्वर्यंयत्प्रसादेनसौभाग्यारोग्यसंपदः ॥ शत्रुहानिःपरोमोक्षःस्तूयतेसानकिंजनैः ॥ १४ ॥ ॥ इति कीलकम् ॥३॥

न्यदेवतोपासनारूपांकिमर्थंगृह्णंतीति ॥ १४ ॥ श्लोकाश्चतुर्दशैवात्रकीलकेसंप्रतिष्ठिताः ॥ अत्रापिमूलंवाराहीतंत्रंस्पष्टंचेदंगुप्तवत्याम् ॥ अत्ररहस्यतंत्रस्थोगुरुकीलकपटलोलिख्यते ॥ शिवउवाच ॥ पुरासनत्कुमारायदत्तमेतन्मयानघ ॥ संवर्तायददौतच्चसचान्यस्मैददौचतत् ॥ १ ॥ सर्वत्रचंडीपाठस्यप्राचुर्येणमहीतले ॥ ब्रह्मकांडः कर्मकांडस्तंत्रकांडश्चसर्वथा ॥२॥ अभूत्प्रतिहतोनेनशीघ्रसिद्धिप्रदायिनी ॥ तदातेषांचसार्थक्यंकर्तुकामेनभूतले॥ ३ ॥दानप्रतिग्रहत्वेनमंत्रोयंकीलितोमया ॥ दानप्रतिग्रहाख्यंयत्कीलंकसमुदाहृतम् ॥४॥ तदारभ्यचमंत्रोयंकीलकेनाभिकीलितः ॥ नसर्वेषांभवेत्सिद्धयैयेकीलकपरा

ङ्मुखाः ॥ ५ ॥ येनराः कीलनेनेमंजपंतिपरयामुदा ॥ तेषांदेवीप्रसन्नास्यात्ततः सर्वाःसमृद्धयः॥६॥त्वत्प्रसूतस्त्वदाज्ञप्तस्त्वद्दासस्त्वत्परायणः ॥ त्वन्नामचिंतनपरस्त्वदर्थेऽहंनियोजितः ॥ ७ ॥ मयार्जितमिदंसर्वंतवस्वंपरमेश्वरि ॥ राष्ट्रंबलंकोशगृहंसैन्यमन्यच्चसाधनम् ॥८॥ त्वदधीनंकरिष्यामियत्रार्थेत्वंनियोक्ष्यसि ॥ तत्रदेविसदावर्तेत्वदाज्ञामेवपालयन् ॥ ९ ॥ इतिसंचिंत्यमनसास्वार्जितानिधनानि[illegible] ॥ कृष्णायांवाचतुर्दश्यामष्टम्यांवासमाहितः ॥ १० ॥ समर्पयेन्महादेव्यैस्वार्जितंसकलंधनम् ॥ राष्ट्रंगृहंकोशबलंनवंचयदुपार्जितम् ॥ ११ ॥ अस्मिन्मासिमयादेवितुभ्यमेतत्समर्पितम् ॥ इतिध्यात्वाततोदेव्याः प्रसादात्प्रतिगृह्यच ॥ १२ ॥ विभज्यपंचधासर्वंत्र्यंशान्स्वार्थंप्रकल्पयेत् ॥ देवपित्रतिथीनांचक्रियार्थंत्वेकमादिशेत् ॥ १३ ॥ एकांशंगुरवेदद्यात्तेनदेवीप्रसीदति ॥ तस्यराज्यंस्वकंसैन्यंकोशः साधुविवर्धते ॥ १४ ॥ नानारत्नाकरःश्रीमान्यथापर्वणिवारिधिः ॥ ज्ञात्वानवाक्षरंमंत्रंजीवब्रह्मसमाश्रयम् ॥ १५ ॥ तत्त्वमस्यादिवाक्यानांसारंसंसारभेषजम् ॥ सप्तशत्याख्यमंत्रस्ययावज्जीवमहंजपम् ॥ १६ ॥ कुर्वंस्ततोनप्रमादंप्राप्नुयामितिनिश्चितम् ॥ कृत्वाप्रारभ्यकुर्वीतह्यकुर्वाणोविनश्यति ॥ १७ ॥ नाहंब्रह्मनिराकुर्यांमामांब्रह्मनिराकरोत् ॥ अनिराकरणंमेस्तुअनिराकरणंमम ॥ १८ ॥ इतिवेदांतमूर्धन्येछांदोग्येस्यप्रपंचनात् ॥ प्रारभ्यतत्परित्यागोनतस्यश्रेयसेततः ॥ १९ ॥ नाब्रह्मवित्कुलेतस्यजायतेहिकदाचन ॥ नदारिद्र्यंकुलेतस्ययावत्स्थास्यतिमेदिनी ॥ २० ॥ प्रतिसंवत्सरंकुर्याच्छारदंवार्षिकंतथा ॥ तेनसर्वमवाप्नोतिसुरासुरसुदुर्लभम् ॥२१॥ अन्यच्चयद्यत्कल्याणंजायतेतत्क्षणेक्षणे ॥ सत्यंसत्यमिदंसत्यंगोपनीयंप्रयत्नतः ॥ २२ ॥ पुत्रायब्रह्मनिष्ठायपित्रादेयंमहात्मना ॥ अन्यथादेवतातस्मैशापंदद्यान्नसंशयः॥२३॥ इति॥अयंभावः ॥ पित्रार्जितंविनास्वेनैवमंत्रप्राप्त्युत्तरंयद्यन्नूतनमर्जितंतदर्जनमाससंबंधिकृष्णचतुर्दश्यष्टम्यन्यतरदिवसेदेवीनिकटेस्थित्वादेशकालौसंकीर्त्यदानप्रतिग्रहाख्येनकर्मणादेवींप्रीणयिष्यइतिसंकल्प्यत्वत्प्रसूतइत्यादिश्लोकत्रयमर्थानुसंधानपूर्वकंपठित्वाराष्ट्रंबलंकोशगृहंइतिश्लोकमंत्रेणदेवीचरणयोर्दत्तमिवानुसंधायप्रसन्नयादेव्या

ज्ञतएवपुनः प्रतिग्रहंविभाव्यतन्मध्येपंचमंभागंगुरवेनिवेद्यतत्पुत्रादिभ्योवादत्त्वावशिष्टंचतुर्थांशंस्वेनक्रियमाणपंचयज्ञादिधर्मव्ययार्थंनिष्कास्येतरत्स्वार्थंयथेष्टं नियोजयेत् ॥ अत्रमासश्चांद्रमासोग्राह्यः ॥ अमायामार्जितस्यतूत्तरमासेदानंमंत्रपूर्वमासीदित्यूहोयथान्धायंतंत्रेणदानादावूह्यः ॥ प्रकृतेतदपवादमाह ॥ ज्ञात्वेतिपंचदशश्लोके॥नवार्णमंत्रंस्वीकृत्यमहावाक्यार्थसंवादिनंतदर्थंचगुरोर्लब्ध्वाधिकृतः सन्नद्यावधियावज्जीवंसप्तशतीस्तवपाठंप्रमादेनसकृदपिनत्यक्ष्येइति दृढंसंकल्प्यतथैवानुतिष्ठेत् ॥ अनेनचकीलकपटलेनददातिप्रतिगृह्णातीत्यस्यज्ञात्वाप्रारभ्यकुर्वीतेत्यस्यचप्रागुक्तोर्थःस्पष्टमेवोक्तइति॥इतिश्रीशैवोपनामकरंग नाथभट्टसुतलक्ष्मीगर्भजनीलकंठभट्टकृतंसप्तशतीकीलकविवरणंसमाप्तम्॥३॥अथरहस्यव्याख्या॥ तत्रसुमेधसंप्रतिसुरथोराजाप्रश्नंकरोति ॥ भगवन्निति ॥ हेभगवन् ॥ यद्भयाद्वातिवातोयंसूर्योभीत्याचगच्छति ॥ इंद्राग्निमृत्यवस्तद्वत्सादेवीचंडिकास्मृतेतिभुवनेश्वरसंहितोक्तेः ॥ चंडभानुः चंडवातइत्यादौ

राजोवाच ॥ भगवन्नवतारामेचंडिकायास्त्वयोदिताः ॥ एतेषांप्रकृतिंब्रह्मन्प्रधानंवक्तुमर्हसि ॥ १ ॥

भयजनकेचंडपदस्यप्रयोगाच्च भयजनककोपार्थकचडिकोपेइतिधातोः पचाद्यचिगौरादिपाठात्ङीषिकृतेचंडीतिरूपंभवति ॥ तद्वशादेवनमस्तेरुद्रमन्यवइत्या दिनाप्रथमंमन्यवेएवनमस्कारदर्शनम् ॥ भीषास्माद्वातःपवते भीषोदेतिसूर्यःभीषास्मादग्निश्चेन्द्रश्चमृत्युर्धावतिपंचमइत्यादिश्रुत्यावाय्वादिभयजनककोपस्या पिपरब्रह्मलिंगत्वमक्षतमेव ॥ अतएवमहद्भयंवज्रमुद्यतमितिश्रुतौवज्रपदेनात्रब्रह्मैवोच्यते नाथुस्यविशेषोभयजनकत्वलिंगादित्युत्तरमीमांसायांकंपनादित्यधि करणे॥ तस्मात्सर्वभयजनकंसर्वप्रशास्तृपरंब्रह्मैवचंडीपदवाच्यम् ॥ तस्याश्चिद्रूपायाश्चंडिकायाअवताराःत्वयामेमह्यंकथिताः ॥ परंतुएतेषामवताराणां ॥१२॥
प्रकृतिंमूलभूतांप्रधानांमुख्यांहेब्रह्मन्वक्तुमर्हसि यन्मुख्यरूपपूजयामूलसेकेनशाखानांसेचनवदवताराणामपिपूजाभविष्यतितन्मुख्यंरूपंकथयेतिभावः ॥ १ ॥

तदेवाह आराध्यमिति ॥ येनचविधिनातद्रूपमाराध्यंतंविधिंदाराध्यंचमेवद ॥ किंचिति चेत्प्रणतस्यमेसंबंधसामान्येषष्ठी ॥ प्रणतंशिष्यंमांब्रूहीत्य

तदेवाह आराध्यमिति ॥ येनचविधिनातद्रूपमाराध्यंतंविधिंतदाराध्यंचरूपंवदेत्यर्थः ॥ किमितिचेत्प्रणतस्यमेसंबंधसामान्येषष्ठी ॥ प्रणतंशिष्यंमांब्रूहीत्यर्थः ॥ भक्तियुक्तायशिष्याययथावद्गुरुणासर्वंवक्तव्यमितिभावः ॥ २ ॥ राजवाक्यंश्रुत्वाऋषिरुवाच ॥ हेराजन्यत्त्वयादृष्टंतादिदंपरममुत्कृष्टंरहस्यमस्ति अतएवैतदनाख्येयंकस्याप्यकथनीयमितिप्रचक्षते ॥ महांतः शिवादयः ॥ तथाचतंत्रेषु ॥ एतत्प्रकाशनंमातुरुद्घाटनमुरोजयोः ॥ तस्मान्नैवप्रकाशोस्यकर्तव्यः परमेश्वरीति ॥ सर्वथाप्रकाशनिषेध उक्तः ॥ तथापि तत्रैवनाभक्तायप्रदातव्यंनाशिष्यायकथंचनेत्युक्तेः ॥ शिष्यस्यानुमतिदर्शनात् ॥ हेनराधिपत्वंभक्तोसिइतितवावाच्यंनैवकिंचिदस्तियत्पृच्छ्यतेतत्सावधानतः शृणु ॥ ३ ॥ तत्रसर्वदेवतानांरूपद्वयंसूक्ष्मंस्थूलंचेति ॥ सूक्ष्मंतत्तदुपाधिविशिष्टचैतन्यरूपंमंत्रवाच्यम् ॥ स्थूलंतुतत्तत्सूक्ष्मरूपोपासकभक्तानुग्रहार्थंतेनैवसूक्ष्मरूपेणस्वीकृतंकरचरणादिविशिष्टंतंत्रविदांस्पष्टमेतत् ॥ तदुभयंदर्शयति ॥ सर्वस्येति ॥ सर्वस्यकार्यप्रपंचस्यसर्वस्यावतारसमूहस्यचाद्याप्रथमामहालक्ष्मीर्भवति ॥ रूपमाह ॥ त्रिगुणेति ॥ त्रयोगुणाः सत्वरजस्तमोरूपाः साम्यावस्थापन्नायस्याःसा अतएवप्रपंचस्योद्भूतगुणस्यकारणत्वात्परमेश्वरीपरमेशित्री ॥ किंजडा नेत्याह॥ लक्ष्येति ॥ लक्ष्यंलक्षणीयंमायारूपमलक्ष्यंब्रह्मरूपंतदुभयस्वरूपात्रिगुणमायाशबलब्रह्मरूपेत्यर्थः ॥ साक्वर्तते॥ तत्राह॥ व्याप्येति ॥ कृत्स्नंजगद्व्याप्यस्थितास्ति नहिघटादिकार्यंमृत्कारणाननुविद्धंक्वचिद्दृश्यतेतथेदमपिजगत्कार्यंसच्चिदानंदमायाशबलब्रह्माननुविद्धंनक्वचिद्भासते ॥ तदुक्तम् ॥ अस्तिभातिप्रियंरूपंनामचेत्यंशपंचकम् ॥ आद्यंत्रयंब्रह्मरूपंमायारूपंततोद्वयमिति ॥ ४ ॥

आराध्यंयन्मयादेव्याःस्वरूपंयेनचद्विज ॥ विधिनाब्रूहिसकलंयथावत्प्रणतस्यमे ॥२॥ ॥ ऋषिरुवाच ॥ ॥ इदंरहस्यंपरममनाख्येयंप्रचक्षते ॥ भक्तोसीतिनमेकिंचित्तवावाच्यंनराधिप ॥ ३ ॥ सर्वस्याद्यामहालक्ष्मीस्त्रिगुणापरमेश्वरी ॥ लक्ष्यालक्ष्यस्वरूपासाव्याप्यकृत्स्नंव्यवस्थिता ॥ ४ ॥

एवंसूक्ष्मंरूपसर्वकारणमुक्त्वावताराणामपिमूलभूतंप्रधानमवतारंस्थूलरूपात्मकंदर्शयति ॥ मातुलिंगमिति ॥ मातुलिंगंबीजपूराख्यंफलं गदाप्रसिद्धा खेटंचर्म पानपात्रंचप्रसिद्धम् ॥ आयुधक्रमस्तुसह्याद्रिखंडेरेणुकामाहात्म्ये ॥ दक्षिणेधःकरेपात्रमूर्ध्वेकौमोदकींतथा ॥ वामेथखेटकंधत्तेश्रीफलंतदधःकरे ॥ बिभ्रतीमस्तकेलिंगंपूजनीयाविभूतयेइति ॥ आयुधार्थस्तुभुवनेश्वरीसंहितायामुक्तः ॥ मातुलिंगंकर्मवृंदंक्रियाशक्त्यात्मिकागदा ॥ ज्ञानशक्त्यात्मकंखेटंतुर्यवृत्तिस्तुपानकम् ॥ लिंगंपुरुषइत्युक्तोयोनिस्तुप्रकृतिःस्मृता ॥ नागःकालः समाख्यातः संबंधस्तुतयोर्द्वयोः ॥ त्रयाणामप्यधिष्ठानंयतः स्यात्परमेश्वरी ॥ नवार्णमंत्रमध्यस्थमायाबजिस्वरूपिणीति ॥ तथाचमातुलिंगग्रहणेनसर्वकर्मणांफलदात्र्यहमस्मीतिबोध्यते ॥ गदाधारणेनक्रियास्वरूपाविक्षेपशक्तिर्मय्यस्तीतिबोधितम् ॥ खेटधारणेनज्ञानशक्तिसद्भावदर्शनेनावरणाभावोबोधितः ॥पानपात्रेणनिरंतरमहंस्वानंदानुभवरसंपिबामीतिबोधितम् ॥ द्वयोः प्रकृतिपुरुषयोः सं

**मातुलिंगंगदांखेटंपानपात्रंचबिभ्रती ॥ नागंलिंगंचयोनिंचबिभ्रतीनृपमूर्धनि ॥५॥ तप्तकांचनवर्णाभातप्तकांचनभूषणा ॥ शून्यंतदखिलं स्वेनपूरयामासतेजसा ॥ ६ ॥**

बंधात्मकोहिकालः तथाचतेषांधारणेनतेषांप्रकृतिपुरुषकालानामधिष्ठानब्रह्मरूपिण्यहमस्मीतिदेव्याबोधितम् ॥ नवार्णमंत्रस्यमध्यस्थंयन्मायाबीजंतदस्यामंत्रोस्तीतिपूर्ववचनेनायमर्थोबोधितः ॥ इयमेवभुवनेश्वरीतितंत्रेषुघंटाघोषः॥भुवनेश्वरीमहालक्ष्म्योः सूक्ष्मरूपैकत्वेपिमायाबीजरूपमंत्रैकत्वेपिस्थूलरूपेणपाशांकुशाभयवरायुधात्मकेनमातुलिंगगदाखेटपानपात्रायुधात्मकत्वेनभेदात् ॥ ध्यानभेदेनैवभेदव्यवहारोनतत्त्वतोमंतव्यः॥सर्वंचेदंतंत्रविदांस्पष्टम् ॥ ५॥अथमहालक्ष्म्यावर्णालंकारानाह॥तप्तकांचनेति॥ रक्तवर्णेत्यर्थः॥शून्यमिति॥शून्यंस्वतःसत्ताशून्यंजगत्स्वतेजसास्वसत्तयापूरयामासपूरितवती॥ यद्वा स्वतेजसास्वप्रतिबिंबचिदाभासेनशून्यंजगत्तेनपूरितवतीत्यर्थः॥अत्रेदंबोध्यम् ॥नियतकालपरिपाकानांहिप्राणिकर्मणांमध्येपरिपक्वानामुपभोगेनक्षयादितरेषांचापरिपक्वानांभोगसंभवेनतदर्थायाः सृष्टेरनुपयोगाद्धिरण्यग



सर्वमेकीकृत्यसुषुप्तावस्थांप्रलयात्मकांगतोभवति ॥ मायादर्शतदागर्भिणीगर्भवत्सर्वप्रपंचरूपमंडंतिष्ठतितदाग्रस्तसमस्तप्रपंचामायास्वनिष्ठेनिर्गुणेब्रह्मणिवि

सर्वमेकीकृत्यसुषुप्तावस्थांप्रलयात्मकांगतोभवति ॥ मायोदरेतदागर्भिणीगर्भवत्सर्वप्रपंचरूपमंडंतिष्ठतितदाग्रस्तसमस्तप्रपंचामायास्वनिष्ठेनिर्गुणेब्रह्मणिविलीनासतीयावदवशिष्टकर्मपरिपाकंतथैवतिष्ठति ॥ तदुक्तंविष्णुपुराणे ॥ जगत्प्रतिष्ठादेवर्षेपृथिव्यप्सुप्रलीयते ॥ तेजःस्वापःप्रलीयंतेतेजोवायौप्रलीयते ॥ वायुःप्रलीयतेव्योम्नितदव्यक्तेप्रलीयते ॥ अव्यक्तंपुरुषेब्रह्मन्निष्कलेसंप्रलीयते॥इति ॥ अव्यक्तंमाया ॥ अव्यक्तंप्रकृतिर्मायेतिवायुपुराणात् । अवशिष्टैःप्राणिकर्मभिश्चतस्यांमायायांविलीयैवक्रमेणप्राप्तपरिपाकैः परमेश्वर्याभगवत्याश्चिदात्मिकायाः सिसृक्षात्मिकामायावृत्तिरुत्पद्यतेसैषामायावस्थाईक्षणकामतपोविचिकीर्षादिशब्दैरभिधीयते ॥ तदैक्षतबहुस्यांप्रजायेयेतिच्छांदोग्ये ॥ सऐक्षतलोकान्नुसृजाइत्यैतरेयके॥सोकामयतबहुस्यांप्रजायेयेतितैत्तिरीये ॥ तपसाचीयतेब्रह्मेतिमुंडके॥ विचिकीर्षुर्घनीभूतीक्वचिदभ्येतिबिंदुतामितिप्रपंचसारे॥प्रलयेसृज्यमानप्राणिकर्मणामपरिपाकदशायांतादृशकर्माभिन्नमायावच्छिन्नंब्रह्मघनीभूतमित्युच्यते ॥ कालवशात्कर्मणांपरिपाकेसतिविश्वदेवस्थः परिपाकप्रागभावोविचिकीर्षेत्युच्यते॥ ततः परिपाकक्षणेमायावृत्तिरुत्पद्यतेतादृशंपरिवक्रकर्माकारपरिणतमायाविशिष्टब्रह्मबिंदुस्तदिदमविभागावस्थमव्यक्तमव्याकृतमित्युच्यते ॥ अतएवतस्योत्पत्तिःश्रूयते ॥ तस्मादव्यक्तमुत्पन्नंत्रिगुणंद्विजसत्तमेति ॥ मायायाअनुत्पन्नत्वेपितादृशाकारेणोत्पन्नत्वादुत्पन्नेतिव्यवहारः ॥ तस्यचव्यक्तस्यब्रह्मणः अव्याकृताव्यक्तमायाशक्तिकारणबीजत्रिगुणापरामहाप्रकृतिभुवनेश्वरीत्यादयः संज्ञाःतन्मं त्रस्यमायाबीजस्याप्येताएवसंज्ञास्तंत्रेषुप्रसिद्धाः ॥ इतरमंत्रापेक्षयामायाबीजेप्रत्यासत्त्यतिशयान्मायाबीजमेवमुख्यत्वेनैतत्तस्यवाचकम् ॥ अतएवमायाबीजस्यदेवीप्रणवशक्तिप्रणवशक्तिप्रणवशक्तिबीजपराबीजत्रिगुणामायापराशक्तीत्यादिसामान्यशब्दैर्व्यवहारस्तंत्रेषु ॥ प्रणवोप्यस्यैवतत्त्वस्यवाचकः ॥ तदुक्तमाचार्यैःशंकरभगवत्पादैःप्रपंचसारेप्रथमपटलेमायास्वरूपनिरूपणानंतरम्॥ तदातांतारमित्याहुरोमात्मेतिबहुश्रुताः॥ तामेवशक्तिंब्रुवतेहरेरात्मेतिचापरेइति ॥ तदेतदव्याकृतंद्विविधमंतर्मुखंबहिर्मुखचेति ॥ तत्रअंतर्मुखस्यतुरीयमितिसंज्ञा ॥ बहिर्मुखस्यकारणदेहइतिसंज्ञा ॥

इमौचद्वौभेदौतापनीयेप्रसिद्धौ ॥ तत्रबहिर्मुखात्तत्त्वादात्मनआकाशःसंभूतइत्यादिक्रमेणसूक्ष्मदेहस्थूलदेहयोरुत्पत्तिःसर्ववेदांतप्रसिद्धा तथाचतुरीयाकारेणसूक्ष्मस्थूलमध्येएवसर्वप्रपञ्चस्यांतर्भावः ॥ तत्रथूलदेहस्यसमष्टिव्यष्ट्यात्मकस्यलिंगदेहस्यज्ञानेंद्रियांतःकरणरूपस्यचाधिपतिःसरस्वतीसहितोब्रह्माक्रियाशक्त्यात्मकप्राणात्मलिंगदेहस्याधिपतिर्लक्ष्मीसहितोविष्णुः कारणदेहस्याभिमानीगौरीसहितोरुद्रस्तुरीयदेहस्यभुवनेश्वरीमहालक्ष्मीअभिमानिन्यौदेवते इतिवस्तुस्थितिःसकलवेदतंत्रपुराणासिद्धा ॥ इदंसर्वंमत्कृतदेवीभागवतटीकायांस्पष्टम् ॥ ६ ॥ तत्रतुरीयरूपाधिष्ठात्र्यामहालक्ष्म्याः सर्वावतारमूलभूतायाः स्वरूपमभिहितं संप्रत्यवतारांतरस्यस्वरूपमाह ॥ शून्यमिति ॥ अधिष्ठातृभिःशून्यंसकलंलोकंविलोक्य केवलेनतमसागुणेनोपाधिनापरंरूपंरूपांतरंबभार

शून्यंतदखिलंलोकंविलोक्यपरमेश्वरी ॥ बभाररूपंपरमंतमसाकेवलेनहि ॥ ७ ॥ साभिन्नांजनसंकाशादंष्ट्रांकितवरानना ॥ विशाललोचनानारीबभूवतनुमध्यमा ॥ ८ ॥

रधारितवतीत्यर्थः॥अयंभावः॥मायाशबलब्रह्मणः सद्रूपत्वंचिद्रूपत्वमानंदरूपत्वंचास्तिगुणत्रयसाम्यावस्थात्मकत्वंच तत्रप्राणिकर्मवशादद्धागुणद्वयापेक्षया तमोगुणः किंचित्स्वस्थानाच्चलितइवजातस्तदातेनकेवलेनचलिततमोगुणेनविशिष्टंयत्तदेवाव्यक्तंतत्तमोगुणाभिमानत्वेनमहाकाल्याख्यंरूपंधारितवदित्यर्थः॥ महालक्ष्मीतुसाम्यावस्थाभिमानिनीतिपूर्वमेवस्थितम् ॥ ७ ॥ तस्याध्यानमाह ॥ सेति ॥ साकालीभिन्नामूलदेवीतःपृथग्भूता ॥ अभिन्नेतिवाछेदः तयोरभेदात् ॥ यद्वा ॥ भिन्नंस्फुटितंयदंजनमतिनीलंतत्संकाशाउपरिगतमलापगमेमध्यभागस्यनीलत्वात् ॥ ८ ॥

पात्रंपानपात्रंपूर्वोक्तार्थकंशिरोमुंडंदक्षिणाकालिकाध्यानेतस्यैवसत्त्वात् ॥ केचित्तु ॥ शिरःशब्देनदंडारोपितग्रीवाभागंखट्वांगनामकमाहुः ॥ कबंधाःशिरोहीनदेहास्तेषांहारंमालामुरसेतिशेषः ॥ हीतिनिश्चयेनशिरसाशिरःस्रजंशिरोमालांदधती ॥ उरसिकबंधमालांशिरसिशिरोमालांदधतीत्यर्थः ॥ केचित्तुकबंधहारशब्देनमुंडमालामहिशिरस्रजमित्यनेनसर्पमस्तकमालामित्यर्थः ॥ मूर्ध्नि सर्पसहस्राणांस्रजंवैसुन्दरीतदेतियामलोक्तेरित्याहुः ॥ कबंधहारमुरसेत्यपिपाठःक्वचित् ॥ तदाशिरसेत्यध्याहारः ॥ ९ ॥ सेतिसैवमुत्पन्नामहाकालीतामसीतमोगुणेननिर्वृतापिप्रमदोत्तमासर्वस्त्रीसमुदायेउत्तमालज्जावती तमःकार्येणांतरस्पृष्टे

खड्गपात्रशिरःखेटैरलंकृतचतुर्भुजा ॥ कबंधहारंशिरसाबिभ्राणाहिशिरःस्रजम् ॥९॥ साप्रोवाचमहालक्ष्मींतामसीप्रमदोत्तमा ॥ नामकर्म चमेमातर्देहितुभ्यंनमोनमः ॥१०॥ तांप्रोवाचमहालक्ष्मीस्तामसींप्रमदोत्तमाम्॥ ददामितवनामानियानिकर्माणितानिते ॥११॥ महामायामहाकालीमहामारीक्षुधातृषा ॥ निद्रातृष्णाचैकवीराकालरात्रिर्दुरत्यया ॥ १२ ॥ वास्तीतिध्वनितम् ॥ महालक्ष्मींप्रोवाचेत्यनेनापि

स्वामिमर्यादापरिपालनप्रकटीकरणेनास्पृष्टतमोगुणदोषेतिध्वनितम् ॥ इच्छयास्वीकृततमोगुणवत्त्वेनतदधीनत्वात् ॥ १० ॥ यानीति ॥ यानियादृशानित्वयाकर्तव्यानिकर्माणिममाभिलषितानितादृशार्थवंतीनिनामानितेतुभ्यंददामि ॥ नामार्थानुरूपमेवकर्मकुर्वित्यर्थः ॥ अनेनैवकर्मोपदेशकरणेनकर्मदेहीतिप्रश्नस्योत्तरमपिदत्तमेवभवतीतिबोध्यम् ॥ यथाश्रुतेतुकर्मदेहीतिप्रार्थनोत्तरंकर्मस्वरूपाकथनेनतस्याअद्यापिकर्माभावायानिकर्माणिइतिअनुपपन्नमेवस्यादितिबोध्यम् ११ महामायेति ॥ ब्रह्मादीनामपिमोहकत्वात्तेषामेवकलनान्मारणाच्चमहामायादिनामत्रयम् ॥ क्षुधातृषेत्यत्रार्शआद्यजंताट्टाप् ॥ सर्वाविद्यादिभक्षणेच्छावतीत्यर्थः ॥ निद्रायोगनिद्रासमाधिस्तद्रूपातदधिष्ठात्रीत्यर्थः ॥ योगनिद्राहरेरुक्तेतिवक्ष्यमाणत्वाच्चतदधिष्ठातृत्वादेवतद्रूपत्वमिति तथासर्वाविद्यादिपानेच्छावतीत्यर्थः ॥

तुदेवीभागवतेप्रसिद्धम् ॥ तृष्णाभक्तकृतभक्तीच्छावतीत्यर्थः ॥ अर्शआद्यजंतम् ॥ एकवीराबाहुलकादेतद्रूपंसिध्यति ॥ एकैववीरापराक्रमविशिष्टा प्रपंचमध्येइत्येकवीरा ॥ कालनाशकत्वात् कालरात्रिः ॥ यस्याध्वंसाभावः सादुरत्यया ॥ इदंसर्वतमोगुणकार्यकारित्वस्योपलक्षणं तमोगुणवत्त्वादेवकृष्ण वर्णत्वमेवमुत्तरत्रापि ॥१२॥ ईदृशार्थज्ञानपुरःसरंनामसंकीर्तनंफलायविधत्ते ॥ १३॥१४॥१५॥ महाविद्येति ॥ महाविद्यादिवागंतानामधिष्ठातृत्वादेवत तन्नाम त्वम् ॥ अन्यानिनामानिप्रसिद्धार्थकत्वान्येव ॥ अत्रापिनामानुरूपमेवकर्मापिसरस्वत्याज्ञेयमनुक्तमपिपूर्ववत् ॥ ननुयथागुणत्रयोपाधिकस्यत्र ह्मणो भिमानिरूपद्वयमुक्तं तथारजोगुणोपाधिकस्याभिमानीरूपांतरंवक्तव्यमितिचेन्न ॥ गुणत्रयसाम्यावस्थाभिमानिमहालक्ष्मीरूपस्यैवरजोगुणाभिमानित्व

इमानितव नामानिप्रतिपाद्यानिकर्मभिः ॥ एभिःकर्माणितेज्ञात्वायोधीतेसोश्नुतेसुखम् ॥१३॥ तामित्युक्त्वामहालक्ष्मीस्वरूपमपरंनृप॥ सत्त्वाख्येनातिशुद्धेनगुणेनेंदुप्रभंददौ ॥१४॥ अक्षमालांकुशधरावीणापुस्तकधारिणी ॥ सावभूववरानारीनामान्यस्यैवसाददौ ॥ १५ ॥ महाविद्यामहावाणीभारतीवाक्सरस्वती ॥ आर्याब्राह्मीकामधेनुर्वेदगर्भाचधीश्वरी ॥ १६ ॥

स्यापि संभवेनतद्वक्तव्यत्वानुपयोगात् ॥ नह्येकंरूपमेकस्यैवाभिमानीतिनियमेनप्रमाणमस्तिनियमेवाभगवतीच्छायाः सर्वतोबलवत्त्वान्नरूपांतरेच्छाभगवत्या इतिनरूपांतरंस्वीकृतं किंतुगुणत्रयसाम्यावस्थाभिमानिस्वस्वरूपस्यैव रजोगुणाभिमानित्वमपिस्वीकृतमिति ॥ अतएवमहालक्ष्म्यामूलभूतायारजोगुणाभिमा नित्वे नरक्तवर्णत्वम् ॥ अतएवदेवीभागवतेप्रथमस्कंधे ॥ तस्यास्तुसात्विकीशक्तीराजसीतामसीतथा ॥ महाकालीमहालक्ष्मीर्महासरस्वतीतिताःस्त्रियः ॥ इतिमूर्तित्रयमध्येमहालक्ष्म्यागणनंकृत्वायस्याएतास्त्रिविधाःशक्तयस्तस्यामहालक्ष्म्याएवमहताप्रबंधेनवर्णनंकृतम् ॥ तृतीयस्कंधेतचोभयोरैक्यएवसंगच्छ ते ॥ एताश्चतस्रःशक्तयःपतिरहिताः स्वतंत्राविषयवासनारहिताःकेवलंस्वानंदानुभवेनैवानंदिताःसंतीतिभुवनेश्वरीसंहितायाम् ॥ १६ ॥



अनंतरकृत्यमाह ॥ अथेति ॥ हेदेव्यौस्वानुरूपतःस्वस्वगुणानुरूपौमिथुनौयुवांजनयतमित्यर्थः ॥ जनयतामित्यपिपाठः ॥ १७ ॥ महालक्ष्मीस्तदे

अनंतरकृत्यमाह ॥ अथेति ॥ हेदेव्यौस्वानुरूपतःस्वस्वगुणानुरूपेणमिथुनेयुवांजनयतमुत्पादयतमित्यर्थः ॥ जनयतामित्यपिपाठः ॥ १७ ॥ महालक्ष्मीस्तेदे व्यावुक्त्वाप्रथमतः स्वयमेवमिथुनंससर्जउत्पादितवती पूर्ववत्स्वस्यापिगुणत्रयमूर्तिमध्यस्थत्वाद्धिरण्यगर्भौहिरण्यवन्निर्मलंज्ञानंहिरण्यंतद्गर्भेययोः एकः पुरुषः अन्यास्त्रीउभावपिकमलासनौ ॥ १८ ॥ अनंतरंदेवीतयोःनामकरणमकरोदित्याह ॥ ब्रह्मन्निति ॥ १९ ॥ मातुराज्ञयातदनंतरंमहाकालीमहासरस्वतीदेव्या वपिमिथुनद्वयमुत्पादितवत्यावित्याह ॥ महाकालीति ॥ २० ॥ सितांश्वेताम् ॥ अतएवमहाकाल्यामंतर्हितसत्त्वगुणोप्यस्तीतिबोध्यम् ॥ २१ ॥ तत्सृष्टपुरुषना

अथोवाचमहालक्ष्मीर्महाकालींसरस्वतीम् ॥ युवांजनयतंदेव्यौमिथुनेस्वानुरूपतः ॥१७॥ इत्युक्त्वातेमहालक्ष्मीःससर्जमिथुनंस्वयम् ॥ हिरण्यगर्भौरुचिरौस्त्रीपुंसौकमलासनौ ॥ १८ ॥ ब्रह्मन्विधेविरिंचेतिधातरित्याहतंनरम् ॥ श्रीःपद्मेकमलेलक्ष्मीत्याहमातास्त्रियंचताम् ॥१९॥ महाकालीभारतीचमिथुनेसृजतःसह॥एतयोरपिरूपाणिनामानिचवदामिते॥२०॥ नीलकंठंरक्तबाहुंश्वेतांगंचंद्रशेखरम् ॥ जनयामासपुरुषं महाकालीसितांस्त्रियम् ॥२१॥ सरुद्रःशंकरःस्थाणुःकपर्दीचत्रिलोचनः ॥ त्रयीविद्याकामधेनुःसास्त्रीभाषास्वराक्षरा ॥२२॥ सरस्वतीस्त्रियंगौरींकृष्णंचपुरुषंनृप ॥ जनयामासनामानितयोरपिवदामिते ॥२३॥ विष्णुःकृष्णोहृषीकेशोवासुदेवोजनार्दनः ॥ उमागौरीसतीचंडीसुंदरीसुभगाशिवा ॥ २४ ॥ एवंयुवतयःसद्यःपुरुषत्वंप्रपेदिरे ॥ चक्षुष्मंतोनुपश्यंतिनेतरेतद्विदोजनाः ॥ २५ ॥

मान्याह॥सइति ॥ त्रयीविद्यास्त्रीभाषाइत्येकैकमभिन्नमेववानामद्वयम् ॥ द्वितीयपक्षेस्त्रीभाषाबालभाषेत्यर्थः॥अक्षरानित्यास्फोटरूपाव्यंजनरूपावास्वराषो डशस्वररूपाउदात्तादिस्वररूपावा॥ २२ ॥सरस्वतीजन्यमिथुनमाह॥सरस्वतीति ॥ अत्राप्यंतर्हितस्तमोगुणोस्त्येव ॥ २३ ॥ २४ ॥एवमिति॥पूर्वंपुरुषाभावेपि स्वयमेवपुरुषरूपाअपितिस्रःशक्तयोजाताइत्यर्थः॥तदिदंचर्मचक्षुषामदृश्यमित्याह॥ चक्षुष्मंतइति ॥ ज्ञानस्यैवमुख्यचक्षुष्ट्वंनचर्मणइतिचक्षुष्मतोज्ञानिनोनुपश्यं

तीतिनतद्भिन्नाइतरेअताद्विदइतिच्छेदः ॥ अयंभावः ॥ कथंस्त्रियःपुरुषत्वंप्रपेदिरेनैतद्बुद्धिगम्यंभवतीतियेवंदतितान्प्रतिकटाक्षेणमुनिराहं ॥ सत्यंभवद्बुद्धिगम्यनं भवतीति ॥ ज्ञानिनांतुमायाशक्तिसामर्थ्यविदांनैतदाश्चर्यभूतमिति ॥ २५ ॥ अनंतरंकृत्यमाह ॥ ब्रह्मणइति ॥ त्रयींसरस्वतीम् ॥ २६ ॥ इत्थंपरस्परविवाहेजातेनंत रंसृष्टिमाह स्वरयेति ॥ इदंचमिथुनत्रयंकारणदेहसूक्ष्मदेहस्थूलदेहानामभिमानीतितापनीयादौस्पष्टम् ॥ तत्रपूर्वकल्पेयोविरिंचिः ॥ सस्वरयाशक्त्यायुक्तः सन्प्रलयकालेसर्वप्राणिकर्मवृंदंस्वाधिष्ठितमेकत्रांडरूपंकृत्वासुषुप्तौसंस्थाप्यस्वयंलीयतइतिपूर्वमवादिष्म तदभिप्रायेणाह ॥ स्वरयेत्यनेनअजीजनत्पूर्वकल्पेइ त्यर्थः ॥ तत्रसुषुप्तेरभिमानीगौरीसहितोरुद्रःसोस्मिन्कल्पेप्रलयचरमकालेतद्धेदंतर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेवव्याक्रियतेइतिश्रुत्युक्तरीत्यानामरू

ब्रह्मणेप्रददौपत्नींमहालक्ष्मीर्नृपत्रयीम् ॥ रुद्रायगौरींवरदांवासुदेवायचश्रियम् ॥२६॥ स्वरस्यासहसंभूयविरिंचोंडमजीजनत् ॥ विभेदभ गवान्रुद्रस्तद्गौर्यासहवीर्यवान् ॥२७॥ अंडमध्येप्रधानादिकार्यजातमभून्नृप ॥ महाभूतात्मकंसर्वंजगत्स्थावरजंगमम् ॥२८॥ पुपोषपाल यामासतल्लक्ष्म्यासहकेशवः ॥ संजहारजगत्सर्वंसहगौर्यामहेश्वरः ॥ २९ ॥ महालक्ष्मीर्महाराजसर्वसत्त्वमयीश्वरी ॥ निराकाराचसाकारा सैवनानाभिधानभृत् ॥ ३० ॥

पविवेचनरूपभेदनेनसुषुप्तौलीनंतदंडंविभेदेत्यमुमर्थमाह ॥ विभेदेति ॥ २७ ॥ अंडमध्येकिमासीत्तदाह ॥ अंडेति ॥ सुषुप्तौकस्यापिभानाभावेनलीनांड मध्येप्रधानादिस्थितिरुक्तायुक्तैवेति ॥ २८ ॥ तदेवनामरूपाभ्यांव्याकृतंजगल्लक्ष्म्या सहितः केशवः सूक्ष्मदेहाभिमानीपुपोष तदेवपालयामासेत्यर्थः ॥ य थावापुपोषतथैवपालयामासेत्यर्थः तदेवपुनः संहारकालेगौर्यासहमहेश्वरः स्वसृष्टमेवजगत्संजहारनाशितवान् ॥ २९ ॥ तथाचपूर्वोक्तरीत्याश्रुत्युक्तसृष्ट्या दिविषयेएवास्यग्रंथस्यतात्पर्यम् ॥ नसगुणपरिच्छिन्नरूपेभ्योब्रह्मादिदेहेभ्यः सृष्टिरित्यत्रउक्तसृष्ट्यादिश्रुतिविरोधात् ॥ अत्रब्रह्मादिशब्देनचतदधिष्ठितंश्रुत्युक्तं

सूक्ष्मंतत्त्वमुच्यतेइतिनकोपिदोषः ॥ इत्थंयस्याःप्रभावः [illegible] विसर्जनरूपश्चसामहालक्ष्मीः कियत्पर्यंतंवर्णनीयेत्यभिप्रायेणा

सूक्ष्मंतत्त्वमुच्यतेइतिनकोपिदोषः ॥ इत्थंयस्याःप्रभावःसर्वप्रपंचसर्जनरूपस्तदधिष्ठातृब्रह्मादिसर्जनरूपश्चसामहालक्ष्मीः कियत्पर्यंतंवर्णनीयेत्यभिप्रायेणा ह ॥ महालक्ष्मीरिति ॥ निराकारानिर्गुणापिसैवमहालक्ष्मीःसाकारासगुणापिसैवनानाभिधानभृत्इति ॥ तथाचश्रुतिःदेव्यथर्वशिरसि ॥ एकैवसर्वत्रवर्तते तस्मादुच्यतेएकाएकैवविश्वरूपिणीतस्मादुच्यतेअनेकेति ॥ ३० ॥ इत्थमध्यारोपमुक्त्वापवादमाह ॥ नामांतरैरिति ॥ सगुणवाचकैःसत्यज्ञानचिन्महा मायादिशब्दरूपैर्नामांतरैरेषानिरूप्यालक्षणीयानतुस्वनाम्नाअन्येनवाकेनचित्प्रत्यक्षादिनाप्रमाणेनबोध्येतिशेषः ॥ तथाचश्रुतिः ॥ ज्ञानानांचिन्मयातीताशू न्यानांशून्यसाक्षिणी ॥ यस्याःपरतरंनास्तिसैषादुर्गाप्रकीर्तिता ॥ यतोवाचोनिवर्तंते अप्राप्यमनसासहेति ॥ सार्धत्रिंशत्समाख्याताःश्लोकास्त्वत्रसुसंस्कृ

नामांतरैर्निरूप्यैषानाम्नानान्येनकेनचित्॥इतिप्राधानिकंरहस्यम् ॥ ४ ॥ ऋषिरुवाच ॥ त्रिगुणातामसीदेवीसात्त्विकीयात्रिधोदिता ॥
साशर्वाचंडिकादुर्गाभद्राभगवतीर्यते ॥ १ ॥ योगनिद्राहरेरुक्तामहाकालीतमोगुणा ॥ मधुकैटभनाशार्थंयांतुष्टावांबुजासनः ॥ २ ॥
दशवक्त्रादशभुजादशपादांजनप्रभा ॥ विशालयाराजमानात्रिंशल्लोचनमालया ॥ ३ ॥ स्फुरद्दशनदंष्ट्रासाभीमरूपापिभूमिप ॥ रूपसौ
भाग्यकांतीनांसाप्रतिष्ठामहाश्रियः ॥ ४ ॥ खड्गबाणगदाशूलचक्रशंखभुशुंडिभृत् ॥ परिघंकार्मुकंशीर्षंनिश्च्योतद्रुधिरंदधौ ॥५॥

ताः ॥ इति श्रीशैवोपनामकरंगनाथभट्टसुतलक्ष्मीगर्भजनीलकंठभट्टकृतं प्राधानिकरहस्यविवरणं समाप्तम् ॥ ४ ॥ इदानीमेतासामेवमूर्तीनांध्यानांतराण्याह ॥ ऋषिरुवाच ॥ त्रिगुणेति ॥ पूर्वोक्तरीत्याऽरजोगुणविशिष्टायामूललक्ष्म्यात्रिगुणात्मिकायाभेदाभावेनोभयोरपिग्रहणंत्रिगुणापदेनोच्यते ॥ शर्वाणीतिवक्तव्ये शर्वेत्युक्त्यापुंसंबंधाभावबोधनेनस्वातंत्र्यमासांबोधितम् ॥ त्रिविधापिसावस्तुतएकैवेतिसैवैतैर्नामभिरीर्यते ॥ १ ॥ याहरेर्योगनिद्राधिष्ठातृत्वेनोक्तासेत्यर्थः ॥ तस्याध्यानांतरंशृण्वित्यर्थः ॥ २ ॥ दशभुजापंचदक्षिणहस्ताःपंचवामहस्ता एवंपादाअपि प्रतिवक्त्रंनेत्रत्रयम् ॥ ३ ॥ शत्रूणांभीमरूपापिभक्तानांरूपसौभाग्य दात्र्यस्त्येवेत्यर्थः ॥ ४ ॥ दक्षिणाधःकरमारभ्यवामाधःकरपर्यंतमायुधान्याह ॥ खड्गेति ॥ निश्च्योतद्रुधिरंशीर्षंमुंडमित्यर्थः ॥ केचित्तुखट्वांगमाहुः ॥५॥

॥ ६ ॥ सर्वेति समहालक्ष्म्याअवतारइत्यर्थः ॥७॥ आननस्यशिवांशजन्यत्वाच्छ्वेतत्वमित्यादिकंमध्यमचरित्रानुरोधेनोह्यम् ॥ ८ ॥ ९ ॥ अत्रसहस्रश ब्दोनंतवाची ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ सरस्वतीध्यानमाह ॥ गौरीति ॥ १४ ॥ १५ ॥ १६ ॥ प्रथमप्रश्नसमाधानमुपसंहरन्नेवद्वितीयप्रश्न

एषासावैष्णवीमायामहाकालीदुरत्यया ॥ आराधितावशीकुर्यात्पूजाकर्तुश्चराचरम् ॥ ६ ॥ सर्वदेवशरीरेभ्योयाविर्भूतामितप्रभा ॥ त्रिगुणासामहालक्ष्मीःसाक्षान्महिषमर्दिनी ॥ ७ ॥ श्वेताननानीलभुजासुश्वेतस्तनमंडला ॥ रक्तमध्यारक्तपादानीलजंघोरुरुन्मदा ॥८॥ सुचित्रजघनाचित्रमाल्यांबरविभूषणा ॥ चित्रानुलेपनाकांतिरूपसौभाग्यशालिनी ॥ ९ ॥ अष्टादशभुजापूज्यासासहस्रभुजासती ॥ आयुधान्यत्रवक्ष्यंतेदक्षिणाधःकरक्रमात्॥१०॥अक्षमालाचकमलंबाणोसिःकुलिशंगदा ॥ चक्रंत्रिशूलंपरशुःशंखोघंटाचपाशकः ॥११॥ शक्तिर्दंडश्चर्मचापंपानपात्रंकमंडलुः ॥ अलंकृतभुजामेभिरायुधैःकमलासनाम् ॥ १२ ॥ सर्वदेवमयीमीशांमहालक्ष्मीमिमांनृप ॥ पूजयेत्सर्वलोकानांसदेवानांप्रभुर्भवेत्॥१३॥गौरीदेहात्समुद्भूतायासत्वैकगुणाश्रया ॥ साक्षात्सरस्वतीप्रोक्ताशुंभासुरनिबर्हिणी॥ १४ ॥ दधौचाष्टभुजाबाणमुसलेशूलचक्रभृत् ॥ शंखंघंटांलांगलंचकार्मुकंवसुधाधिप ॥ १५ ॥ एषासंपूजिताभक्त्यासर्वज्ञत्वंप्रयच्छति ॥ निशुंभमथिनीदेवीशुंभासुरनिबर्हिणी ॥ १६ ॥ इत्युक्तानिस्वरूपाणिमूर्तीनांतवपार्थिव ॥ उपासनंजगन्मातुःपृथगासांनिशामय ॥ १७ ॥

स्योत्तरंप्रतिजानीते ॥ इत्युक्तेति ॥ जगन्मातुस्तप्तकांचनवर्णाभेत्यनेनोक्तायामहालक्ष्म्याउपासनम् ॥ आसांचमहाकाल्यादीनांतिसृणांचपृथग्भिन्नंभिन्नमु पासनंनिशामयेत्यर्थः ॥ १७ ॥ ॥१७॥

यदामहालक्ष्मीश्चतुर्भुजातप्तकांचनेतिध्यानोक्तापूज्यातदातांमध्येस्थानेसंपूज्यतस्याएवप्रत्यासन्नयोर्दक्षिणोत्तरभागयोर्दक्षिणभागेचतुर्भुजांमहाकालीमुत्तरेवामभा

यदामहालक्ष्मीश्चतुर्भुजातत्कांचनेतिध्यानोक्तापूज्यातदातांमध्येस्थानेसंपूज्यतस्याएवप्रत्यासत्त्यादक्षिणोतरभागयोर्दक्षिणभागेचतुर्भुजांमहाकालीमुत्तरेवामभागेमहासरस्वतींचतुर्भुजांपूजयेत् ॥ देवतात्रयमपिचतुर्भुजंपूर्वोक्तायुधचतुष्टयविशिष्टमेवपूज्यम् ॥ पृष्ठतःएतासांपृष्ठभागेमिथुनत्रयंपूजयेदित्यर्थः ॥ १८ ॥ तत्रापिस्थानान्याह ॥ विरिंचिरिति ॥ महालक्ष्म्याःपृष्ठभागेदक्षिणे ॥ विरिंचेर्दक्षिणेमहाकाल्याःपृष्ठभागेवामे ॥ विरिंचेर्वामेसरस्वत्याःपृष्ठभागेइत्यर्थः ॥ मध्यस्थदेवीत्रयस्यपुरतोवक्ष्यमाणंदेवतात्रयंपूजयेत् ॥ १९ ॥ तदेवदेवतात्रयमाह ॥ अष्टेति ॥ महालक्ष्म्याःसंमुखंमध्येअष्टादशभुजामहालक्ष्मीःपूज्या ॥ अस्याअष्टादशभुजायावामभागेचतुर्भुजमहाकालीसंमुखंदशाननाकालीपूज्या ॥ अस्याएवाष्टादशभुजायादक्षिणेभागेअष्टभुजांसरस्वतींचतुर्भुजसरस्वत्याअग्रे

महालक्ष्मीर्यदापूज्यामहाकालीसरस्वती ॥ दक्षिणोत्तरयोःपूज्येपृष्ठतोमिथुनत्रयम् ॥ १८ ॥ विरिंचिःस्वरयामध्येरुद्रोगौर्याश्चदक्षिणे ॥
वामेलक्ष्म्याहृषीकेशःपुरतोदेवतात्रयम् ॥१९॥ अष्टादशभुजामध्येवामेचास्यादशानना ॥ दक्षिणेष्टभुजालक्ष्मीर्महतीतिसमर्चयेत्॥२०॥

पूजयेत् ॥ लक्ष्मीर्महतीत्यत्रद्वितीयाभावः ॥ इतिशब्देनकर्मत्वस्याभिधानात् ॥ इत्थंचतुर्भुजमहालक्ष्म्याःपूजेत्यर्थः ॥ अत्रचतुर्भुजमहाकाल्याश्चतुर्भुजमहासरस्वत्याश्वस्वातंत्र्येणपूजानास्ति ॥ चतुर्भुजमहालक्ष्म्यपेक्षयातयोःस्वातंत्र्याभावात्तयोरस्यांपूजायांस्थितत्वादेवंप्रकारपूजयैवतयोरपिपूजासिध्यतीतितयोरुपासकेनापितथैवपूजाकर्तव्या ॥ तदुक्तंलक्ष्मीतंत्रे ॥ इत्थमेवार्चनाप्रोक्तातयोःशक्त्योर्नराधिपेति ॥ तदयंनिर्गलितोर्थः ॥ भूर्जपत्रेस्वर्णादिपट्टेवास्थंडिलेवानवकोष्ठंयंत्रंकृत्वातत्रप्रथमपंक्तावीशानकोणादग्निकोणपर्यंतंरुद्रगौर्यौविरिंचिसरस्वत्यौविष्णुलक्ष्म्यौपूजयेत् ॥ मध्यमपंक्तौक्रमेणोत्तरकोष्ठादिदक्षिणांतंमहाकालीमहालक्ष्मीमहासरस्वतीत्रयंतृतीयपंक्तौवायुकोणान्निर्ऋतिकोणपर्यंतंदशाननाष्टादशभुजाष्टभुजाःपूजयेदिति ॥ २० ॥

अधुनाकेवलाष्टादशभुजादशाननाष्टभुजानामवताराणांपृथक्पूजामाह ॥ अष्टेति ॥ अष्टादशभुजाचैषावादशाननाचवाष्टभुजायदापूज्यातदाएतासांदेवतानांद क्षिणेभागेकालमुत्तरेमृत्युंचपूजयेदित्युत्तरेणान्वयः ॥ २१ ॥ तत्राष्टभुजापूजायांविशेषमाह ॥ यदेत्युत्तरेणान्वयः ॥ २२ ॥ नवशक्तयःशै लपुत्र्याद्याः ॥ तथादक्षिणोत्तरयोरुद्रविनायकौचसंपूज्यौ ॥ अयमपिद्वितीयपक्षःसरस्वतीपूजायामस्तिनत्वनेनपूर्वपक्षस्यवाबाधस्तस्यवैयर्थ्यापत्तेः ॥ तथा चसरस्वतीपूजायांविकल्पःफलितः ॥ प्रसंगात्पूजाचतुष्टयेपिस्तोत्रमंत्रानाह ॥ नमइति ॥ स्तोत्रैरितिबहुवचनेनचरित्रत्रयांतर्गतस्तोत्रैरपिप्रथमपूजायां

अष्टादशभुजाचैषायदापूज्यानराधिप ॥ दशाननाचाष्टभुजादक्षिणोत्तरयोस्तदा ॥ २१ ॥ कालमृत्यूचसंपूज्यौसर्वारिष्टप्रशांतये ॥ यदा चाष्टभुजापूज्याशुंभासुरनिबर्हिणी॥२२॥ नवास्याःशक्तयःपूज्यास्तथारुद्रविनायकौ ॥ नमोदेव्याइतिस्तोत्रैर्महालक्ष्मींसमर्चयेत्॥२३॥ अवतारत्रयाचार्यांस्तोत्रमंत्रास्तदाश्रयाः ॥ अष्टादशभुजाचैषापूज्यामहिषमर्दिनी ॥ २४ ॥ महालक्ष्मीर्महाकालीसैवप्रोक्तासरस्वती ॥ ईश्वरीपुण्यपापानांसर्वलोकमहेश्वरी ॥ २५ ॥ महिषांतकरीयेनपूजितासजगत्प्रभुः ॥ पूजयेज्जगतांधात्रींचंडिकांभक्तवत्सलाम्॥ २६ ॥ अर्घ्यादिभिरलंकारैर्गंधपुष्पैस्तथाक्षतैः ॥ धूपैर्दीपैश्चनैवेद्यैर्नानाभक्ष्यसमन्वितैः ॥ २७ ॥

स्तुतिःकर्तव्येत्यर्थः ॥ २३ ॥ अवतारेति ॥ पृथगवतारत्रयेतुतत्तद्देवताचरित्रांतर्गततत्तत्स्तोत्रेणैवस्तुतिःकर्तव्येत्यर्थः ॥ अवतारत्रयेपिमहालक्ष्मीपूजयैवे तरयोःपूजयोर्गतार्थत्वमाह ॥ अष्टेति ॥ २४ ॥ तत्रहेतुमाह ॥ महालक्ष्मीरिति॥यतोमहालक्ष्म्येवेतरस्वरूपातस्मात्सैवपूज्येत्यर्थः ॥ तयोरपेक्षयामहाल क्ष्म्याः पूर्वोक्तरीत्यामूलप्रकृत्यासहप्रत्यासत्त्याधिक्यात् ॥ अन्यत्स्पष्टार्थमेव ॥ २५ ॥ २६ ॥ २७ ॥



रुधिराक्तेनेति ॥ इदंचब्राह्मणातिरिक्तविषयम् ॥ तथाचश्रुतिरुत्तरतंत्रवार्तिककारिभिर्मीमांसकाचार्यैरुक्ता ॥ यन्मान्यमासीत्तत्पश्चात्पर्यौहत्सुरांवमाल्यंततो

रुधिराक्तेनेति ॥ इदंचब्राह्मणातिरिक्तविषयम् ॥ तथाचश्रुतिरुत्तरतंत्रवार्तिककारैर्मीमांसकाचार्यैरुक्ता ॥ यन्माल्यमासीत्तत्पश्चात्पर्यौहत्सुरावैमाल्यंततो राजन्यमसृजततस्माज्ज्यायांश्चकनीयांश्चश्वशुरश्चस्नुषाचश्वश्रूश्चसुरांपीत्वाविलपंतआसतेपाप्मावैमाल्यंतस्माद्ब्राह्मणःसुरांनपिबेत्पाप्मनासंसृज्यतइति ॥ तत्रैव ॥ गौडीपैष्टीतथामाध्वीविज्ञेयात्रिविधासुरा॥यथैवैकातथासर्वानपेयाब्रह्मवादिभिरिति॥नसुरांपिबेदितितैत्तिरीयश्रुतिरपि॥तथाकूर्मपुराणादिसर्वपुराणेषु । कूर्मपुराणेद्वादशाध्याये ॥ नचवेदादृतेकिंचिच्छास्त्रंधर्माभिधायकम्॥योयथारमतेविप्रोनसंभाष्योद्विजातिभिः॥यानिशास्त्राणिदृश्यंतेलोकेस्मिन्विविधानितु ॥ श्रुतिस्मृतिविरुद्धानिनिष्ठातेषांहितामसी॥कापालंभैरवंचैवयामलंवाममार्हतम्॥एवंविधानिचान्यानिमोहनार्थानितानितु ॥ येकुशास्त्राभियोगेनमोहयंतीहमानवान्॥मयासृष्टानिशास्त्राणिमोहायैषांभवांतरे॥एवंसर्वपुराणेषु॥ तथाकालिकापुराणे॥अवश्यंविहितंयत्रमद्यंतत्रद्विजःपुनः ॥ नारिकेलजलंकांस्यपात्रेवाविसृ

रुधिराक्तेनबलिनामांसेनसुरयानृप ॥ प्रणामाचमनीयेनचंदनेनसुगंधिना ॥ २८ ॥
सकर्पूरैश्चतांबूलैर्भक्तिभावसमन्वितैः ॥ वामभागेग्रतोदेव्याछिन्नशीर्षंमहासुरम् ॥ २९ ॥

जेन्मधु ॥ सिंहव्याघ्रादिकंदत्त्वाचात्मवध्यामवाप्नुयात्॥मद्यंदत्त्वाब्राह्मणस्तुब्राह्मण्यादेवहीयतेइति ॥पशुहिंसानकर्तव्याब्राह्मणेनकदाचन॥ बलिदानेयदोक्तास्यात्तत्रपैष्टंनियोजयेदिति॥पैष्टंपिष्टनिर्मितंपशुंकृत्वातस्यबलिंनियोजयेदित्यर्थः।तथाचिद्वल्लीतंत्रमेरुतंत्रमहाकालसंहितादक्षिणाचारतंत्रराजादिसर्वतंत्रेषु॥मद्यंदत्त्वाब्राह्मणस्तुब्राह्मण्यादेवहीयते॥नकर्तव्यंनकर्तव्यंनकर्तव्यंकदाचन ॥इदंतुसाहसंदेविनकर्तव्यंकदाचनेत्यादि॥ ननुतंत्रेषुब्राह्मणस्यापिवामाचारप्रतिपादकानिवचनानिदृश्यंतेतेषांकागतिरितिचेत्॥भ्रष्टब्राह्मणविषयाणितानीतिब्रूमः।तदप्युक्तंचिद्वल्लीतंत्रे॥तंत्राणिद्विविधानीहमयाप्रोक्तानिपार्वति॥श्रुतिस्मृत्यविरुद्धानितद्विरुद्धानिचैवहि॥वेदेनाधिकृतानांतुब्राह्मणानांगतेर्वशात्॥तद्विरुद्धानिचोक्तानिनैवग्राह्याणिवैदिकैरित्यादि॥स्कांदेवायुसंहितायाम्।शैवागमोपिद्विविधः

श्रौताश्रौतश्चतद्विधः ॥ श्रुतिसारमयःश्रौतःस्वतंत्रइतरोमतइत्यादिश्रौतोग्राह्यस्तुवैदिकैरिति ॥ ननुतंत्रस्मृतिविरोधात्सुरामांसनिषेधश्रुतिरसंस्कृतसुरामांसभक्षण परास्त्विवतिचेन्न ॥ दुर्बलस्मृतिविरोधेनप्रबलश्रुतेःसंकोचस्यशास्त्रकारैरनंगीकारात् ॥ मीमांसाप्रथमपादेस्पष्टमेतत् ॥ ननुकालिकात्रिपुरोपनिषदादिश्रुतिप्रामाण्या त्तन्निषेधकश्रुतेःसंकोचोस्त्विवतिचेन्न ॥ कालिकाद्युपनिषद्घटितशाखानामुच्छिन्नत्वात्कालिकाद्युपनिषत्सुकल्पितत्वसंदेहादिदमपिमीमांसाप्रथमपादेस्पष्टम् ॥ एवंसतिसर्वतंत्राणांप्रामाण्यमधिकारिभेदेनैवाव्याहतम् ॥ अतएवस्कांदेसूतसंहितायांपुराणांतरेचतंत्रप्रामाण्यप्रस्तावे ॥ मृषावादीकथंशिवइत्यादिवचनैरधिका रिभेदेनैवतंत्रप्रामाण्यंसमर्थितंविस्तरेणचैतन्मत्कृततंत्रप्रामाण्यविमर्शिन्यांद्रष्टव्यम् ॥ एतेनकैश्चित्सप्तशतीटीकायांतंत्राणामप्रामाण्यंसमर्थितंततत्किंचिज्ज्ञत्व

पूजयेन्महिषंयेनप्राप्तंसायुज्यमीशया ॥ दक्षिणेपुरतःसिंहंसमग्रंधर्ममीश्वरम् ॥ ३० ॥
वाहनंपूजयेद्देव्याधृतंयेनचराचरम् ॥ यःकुर्यात्प्रयतोधीमांस्तस्याएकाग्रमानसः ॥ ३१ ॥

मूलकंनास्तिकत्वमूलकंचेतिसुधीभिराकलनीयम् ॥ तंत्रनिषेधकवचनानांतदुदाहृतानांवेदविरुद्धतंत्रविषयत्वादित्यादिकंसर्वमत्कृततंत्रप्रामाण्यविमर्शिन्यांद्रष्ट व्यम् ॥ अत्रापिराजानंप्रत्येवमुनिनाकथितत्वाद्रुधिराक्तेनेत्यादिकंब्राह्मणातिरिक्तविषयकमेवेतिबोध्यम् ॥ २८ ॥ २९ ॥ प्राप्तंसायुज्यमीशया ॥ एते नवैरिष्वपिभगवत्याजगन्मातुर्वात्सल्यंदर्शितम् ॥ अतएववैरिष्वपिप्रकटितैवदयात्वयेत्थमित्युक्तम् ॥ योधीमानेकाग्रमानसःप्रयतस्तस्याःपरमेश्वर्याःपूजांकुर्या त्ससिंहंधर्मात्मकंपूजयेदित्यग्रिमेणान्वयः ॥ अनेनचसिंहस्यवासनात्मकरूपमुक्तंवेदितव्यम् ॥ धर्मवाहनत्वकथनेनानेकजन्मपुण्यवंतःसर्वधर्मात्मानएवपुरुषा एतांदेवतांप्राप्नुवंतिनान्येइत्युक्तंभवति ॥ तदुक्तंब्रह्मांडपुराणे ॥ यस्यनोपश्चिमंजन्मयदिवाशंकरःस्वयम् ॥ तेनैवलभ्यतेविद्याश्रीमत्पंचदशाक्षरीति ॥ ३० ॥ ३१ ॥ ॥१९॥

प्रथमतःकवचंततोर्गलांततःकीलकंततोरात्रिसूक्तंततोनवार्णमंत्रजपः मध्यचरित्रत्रयपुनर्नवार्णंततोदेवीसूक्तंततोरहस्यत्रयमित्येवंक्रमेणस्तुवीतेत्यर्थः ॥ विस्त

प्रथमतःकवचंततोर्गलांततःकीलकंततोरात्रिसूक्तंततोनवार्णमंत्रजपः मध्येचरित्रत्रयंपुनर्नवार्णंततोदेवीसूक्तंततोरहस्यत्रयमित्येवंक्रमेणस्तुवीतेत्यर्थः ॥ विस्तरेणचएतदग्रेवक्ष्यामः ॥ यदिसमग्रंपाठंकर्तुंनशक्नोतितंप्रत्याह ॥ एकेनेति ॥ एकेनचेत्स्तुवीततदामध्यमेनैवस्तुवीतेत्यर्थः ॥ महालक्ष्म्यामूलप्रकृत्यभेदेनसर्वदेवतात्मकत्वात्तच्चरित्रपाठेनसर्वदेवतास्तृप्यंतीतिभावः ॥ पूर्वोक्तपूजाचतुष्टयेप्येषविधिर्बोध्यः ॥ इतरयोश्चरितयोर्मध्येएकेननस्तुवीतेत्यर्थः॥ ३२ ॥ ॥ ३३ ॥ प्रतिश्लोकंप्रतिमंत्रमित्यर्थः ॥ तेचमंत्राःसप्तशतीस्तोत्रसंबंधिनः कात्यायनीतंत्रप्रदर्शिताः सप्तशतसंख्याकाः मार्कंडेयउवाचस्वाहाइत्यादिकाः ॥ अत्रकेचित्कवचादित्रयस्यरहस्यत्रयस्यचप्रतिश्लोकंहोममनुतिष्ठंति ॥ तत्रकवचांशेहोमोनयुक्तस्तंत्रांतरेनिषेधात् ॥ चंडीस्तवेप्रतिश्लोकमेकाहुति

ततःकृतांजलिर्भूत्वास्तुवीतचरितैरिमैः ॥ एकेनवामध्यमेननैकेनेतरयोरिह ॥ ३२ ॥ चरितार्धंतुनजपेज्जपञ्छिद्रमवाप्नुयात् ॥ प्रदक्षिणांनमस्कारान्कृत्वामूर्ध्नाकृतांजलिः ॥ ३३ ॥ क्षमापयेज्जगद्धात्रींमुहुर्मुहुरतंद्रितः ॥ प्रतिश्लोकंतुजुहुयात्पायसंतिलसर्पिषा ॥ ३४ ॥ जुहुयात्स्तोत्रमंत्रैर्वाचंडिकायैशुभंहविः ॥ भूयोनामपदैर्देवींपूजयेत्सुसमाहितः ॥ ३५ ॥ प्रयतःप्रांजलिःप्रह्वःप्रणम्यारोप्यचात्मनि ॥ सुचिरंभावयेदीशांचंडिकांतन्मयोभवेत् ॥ ३६ ॥

रिहेष्यते ॥ रक्षाकवचगैर्मंत्रैर्होमंतत्रनकारयेत् ॥ मौर्ख्यात्कवचगैर्मंत्रैःप्रतिश्लोकंजुहोतियः ॥ स्याद्देहपतनंतस्यनरकंचप्रपद्यते ॥ अंधकाख्योमहादैत्योदुर्गाभक्तिपरायणः ॥ कवचाहुतिजात्पापान्महेशेननिपातितइति ॥ ३४ ॥ एतावदशक्तस्यपक्षांतरमाह ॥ जुहुयादिति ॥ स्तोत्रमंत्रैः रात्रिसूक्तादिस्तोत्रस्थमंत्रैरित्यर्थः ॥ केचित्तुस्तोत्रमंत्रशब्देननवार्णमंत्रमित्याहुः ॥ तन्मंदम् ॥ प्रमाणाभावात् ॥ बहुत्वानुपपन्नंस्याच्च ॥ अयंचहोमः प्रकरणान्नित्यपूजांगभूतः ॥ ३५ ॥ ३६ ॥

अस्याःपूजायाः काम्यत्वंनित्यत्वंक्रमेणाह ॥ एवंयइतिद्वाभ्याम् ॥ ३७ ॥ ३८ ॥ उपसंहरति ॥ तस्मादिति ॥ ३९ ॥ श्लोकाश्चैको नचत्वारिंशत्संख्यास्तत्रकीर्तिताः ॥ इतिश्रीशैवोपनामकरंगनाथभट्टसुतलक्ष्मीगर्भजनीलकंठकृतंवैकृतिकरहस्यविवरणंसमाप्तम् ॥ ५ ॥ एकादशाध्यायां तेसप्तशत्यांलोकरक्षार्थंभविष्यमाणायेनंदजादयोवताराः कथितास्तेषांध्यानमुपास्तिंचाह ॥ नंदेति विंध्यवासिनीयम् ॥ १ ॥ कनकेहिरण्येउत्त



एवंयःपूजयेद्भक्त्याप्रत्यहंपरमेश्वरीम् ॥ भुक्त्वाभोगान्यथाकामंदेवीसायुज्यमाप्नुयात् ॥३७॥ योनपूजयतेनित्यंचंडिकांभक्तवत्सलाम्॥ भस्मीकृत्यास्यपुण्यानिनिर्दहेत्परमेश्वरी ॥३८॥तस्मात्पूजयभूपालसर्वलोकमहेश्वरीम्॥यथोक्तेनविधानेनचंडिकांसुखमाप्स्यसि ॥३९॥ इति वैकृतिकरहस्यम् ॥ ५ ॥ ऋषिरुवाच ॥ ॥ नंदाभगवतीनामयाभविष्यतिनंदजा॥ सास्तुतापूजिताभक्त्यावशीकुर्याज्जगत्रयम् ॥ ॥ १ ॥ कनकोत्तमकांतिःसासुकांतिकनकांबरा ॥ देवीकनकवर्णाभाकनकोत्तमभूषणा ॥ २ ॥ कमलांकुशपाशाब्जैरलंकृतचतुर्भुजा ॥ इंदिराकमलालक्ष्मीःसाश्रीरुक्मांबुजासना ॥ ३ ॥ यारक्तदंतिकानामदेवीप्रोक्तामयानघ ॥ तस्याःस्वरूपंवक्ष्यामिशृणुसर्वभयाप हम् ॥ ४ ॥ रक्तांबरारक्तवर्णारक्तसर्वांगभूषणा ॥ रक्तायुधारक्तनेत्रारक्तकेशातिभीषणा ॥ ५ ॥ रक्ततीक्ष्णनखारक्तदशनारक्तदंतिका ॥ पतिंनारीवानुरक्तादेवीभक्तंभजेज्जनम् ॥ ६ ॥ वसुधेवविशालासासुमेरुयुगुलस्तनी ॥ दीर्घौलंबावतिस्थूलौतावतीवमनोहरौ ॥ ७ ॥

माकांतिरिच्छायस्याःसा ॥ २ ॥ पाशाब्जैरित्यत्रअब्जःशंखः ॥ चक्रंशंखवराभयानिदधतीतिशारदायांविंध्यवासनीध्यानेउक्तत्वात् ॥ कमलस्यैकवारं ग्रहणाच्च ॥ ३ ॥ अथरक्तदन्तिकामाह ॥ येति ॥ ४ ॥ ५ ॥ रक्तदंतिकानामिकादेवीत्यर्थः ॥ पतिंनारीवेतिदृष्टांतोऽनुरागमात्रांशेज्ञेयः ॥६॥ दीर्घलंबा वित्यत्रतिर्यग्लंबायमानतैवगृह्यतेनत्वधःपतनमतिस्थूलौकर्कशावितिविशेषणात् ॥ दीर्घालंबेतिपुनरुक्त्यातुअतिदीर्घावित्यर्थः ॥ ७ ॥



किमित्यतिस्थूलौजातावित्यतआह ॥ सर्वेति॥सर्वानंदरसंभरितत्वादतिस्थूलावित्यर्थः ॥ तदपिकिमर्थमितिचेद्भक्तपानार्थमित्याह ॥ भक्तानिति ॥ तेना

किमित्यतिस्थूलौजातावित्यतआह ॥ सर्वेति ॥ सर्वानंदरसभरितत्वादतिस्थूलावित्यर्थः ॥ तदपिकिमर्थमितिचेद्भक्तपानार्थमित्याह ॥ भक्तानिति ॥ तेनातिशयदयावतीयमितिफलितम् ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ शिलीमुखापूर्णंबाणपूर्णमित्यर्थः ॥ १३ ॥ १४ ॥ धनुर्बाणपद्मशाका

कर्कशावतिकांतौतौसर्वानंदपयोनिधी ॥ भक्तान्संपाययेद्देवीसर्वकामदुघौस्तनौ ॥ ८ ॥ खड्गपात्रंचमुसलंलांगलंचबिभर्तिसा ॥ आख्यातारक्तचामुंडादेवीयोगेश्वरीतिच ॥ ९ ॥ अनयाव्याप्तमखिलंजगत्स्थावरजंगमम् ॥ इमांयःपूजयेद्भक्त्यासव्याप्नोतिचराचरम् ॥ १० ॥ अधीतेयइमंनित्यंरक्तदंत्यावपुस्तवम् ॥ तंसापरिचरेद्देवीपतिंप्रियमिवांगना ॥ ११ ॥ शाकंभरीनीलवर्णानीलोत्पलविलोचना ॥ गंभीरनाभिस्त्रिवलीविभूषिततनूदरी ॥ १२ ॥ सुकर्कशसमोत्तुंगवृत्तपीनघनस्तनी ॥ मुष्टिंशिलीमुखापूर्णंकमलंकमलालया ॥ १३ ॥ पुष्पपल्लवमूलादिफलाढ्यंशाकसंचयम् ॥ काम्यानंतरसैर्युक्तंक्षुत्तृण्मृत्युभयापहम् ॥१४॥ कार्मुकंचस्फुरत्कांतिबिभ्रतीपरमेश्वरी ॥ शाकंभरीशताक्षीसासैवदुर्गाप्रकीर्तिता ॥ १५ ॥ विशोकादुष्टदमनीशमनीदुरितापदाम् ॥ उमागौरीसतीचंडीकालिकासाचपार्वती ॥१६॥ शाकंभरींस्तुवन्ध्यायञ्जपन्संपूजयन्नमन् ॥ अक्षय्यमश्नुतेशीघ्रमन्नपानामृतंफलम् ॥ १७ ॥ भीमापिनीलवर्णासादंष्ट्रादशनभासुरा ॥ विशाललोचनानारीवृत्तपीनपयोधरा॥१८॥चंद्रहासंचडमरुंशिरःपात्रंचबिभ्रती॥एकवीराकालरात्रिःसैवोक्ताकामदास्तुता ॥१९॥ तेजोमंडलदुर्धर्षाभ्रामरीचित्रकांतिभृत् ॥ चित्रानुलेपनादेवीचित्राभरणभूषिता ॥ २० ॥

न्बिभ्रतीचतुर्भिर्भुजैरित्यर्थः ॥ देवीभागवतोक्तशताक्षीमूर्त्युपाख्यानरीत्याशताक्षीमूर्तिदुर्गामूर्त्योरवतारांतरत्वाभावेनशाकंभरीपूजयैवदुर्गापूजामुपदिशति ॥ सैवेति ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ चंद्रहासंखड्गम् ॥ १९ ॥ सप्तमीमूर्तिमाह ॥ तेजइति ॥ चित्रकांतिरनेकवर्णकांतिः ॥ २० ॥

चित्रभ्रमरपाणिः हस्तेअनेकवर्णविशिष्टोभ्रमरोययाधृतः ॥ सचभ्रमरोजीवरूपस्तेनचसर्वेजीवामदधीनाः संतीतिबोधितम् ॥ तदुक्तंभुवनेश्वरीसंहितायाम् ॥ द्विरेफाजीवरूपास्युर्यययाहस्तेधृताःसदा ॥ जीवाधीशाततःप्रोक्ताभ्रामरीलोकसुंदरीति ॥ एतासांदेवतानामुपाख्यानंदेवीभागवतेस्पष्टम् ॥ २१ ॥ २२ ॥ रहस्यत्रयस्याध्ययनंविधत्ते ॥ तस्मादिति ॥ २३ ॥ फलंकथयति ॥ सप्तेति ॥ २४ ॥ उपसंहरति देव्याइति ॥ सर्वकामफलप्रदंधमार्थकाममोक्षप्रदमित्यर्थः ॥ २५ ॥ पंचविंशतिसंख्यास्तुश्लोकाअत्रप्रकीर्तिताः ॥ रक्तांबरादरुणबिंबफलाधरौष्ठाचंद्रार्धबद्धमुकुटात्करुणासमुद्रात् ॥ पाशांकुशाभयवराढ्यकरा

चित्रभ्रमरपाणिःसामहामारीतिगीयते ॥ इत्येतामूर्तयोदेव्याव्याख्यातावसुधाधिप ॥२१॥ जगन्मातुश्चंडिकायाःकीर्तिताःकामधेनवः ॥ इदंरहस्यंपरमंनवाच्यंकस्यचित्त्वया ॥ २२ ॥ आख्यानंदिव्यमूर्तीनामभीष्टफलदायकम्॥तस्मात्सर्वप्रयत्नेनदेवींजपनिरंतरम् ॥२३॥ सप्तजन्मार्जितैर्घोरैर्ब्रह्महत्यासमैरपि ॥ पाठमात्रेणमंत्राणांमुच्यतेसर्वकिल्बिषैः ॥ २४ ॥ देव्याध्यानंतवाख्यातंगुह्याद्गुह्यतरंमहत् ॥ तस्मात्सर्वप्रयत्नेनसर्वकामफलप्रदम् ॥ २५ ॥ इतिमूर्तिरहस्यम् ॥ ६ ॥

त्रिनेत्रादंतःपुरात्पुररिपोरपरंसविघ्नः ॥ १ ॥ श्रीमच्छैवकुलोत्पन्नोरंगनाथात्मजःसुधीः ॥ श्रीलक्ष्मीगर्भसंभूतोनीलकंठाभिधानतः ॥ २ ॥ सप्तशत्यंगषट्कस्यव्याख्यांयःकृतवाञ्छुभाम् ॥ तयातुष्यतुसालक्ष्मीस्तथाश्रीभुवनेश्वरी ॥ ३ ॥ इति श्रीशैवोपनामकरंगनाथसुतलक्ष्मीगर्भसंभवनीलकंठभट्टकृतंसप्तशत्यंगषट्कविवरणं समाप्तम् ॥ ६ ॥ मूलम् ॥ १८१ ॥ टीका ॥ ८२० ॥



अहमित्यष्टर्चंत्रयोदशंसूक्तंवागांभृणस्यमहर्षेर्दुहितावाङ्नाम्नीब्रह्मविदूषीस्वात्मानमस्तौत् ॥ अंबृणः साऋषिः ॥ सच्चित्सुखात्मकः सर्वगतः परमात्मादेवता ॥

अहमित्यष्टर्चंत्रयोदशंसूक्तंवागांभृणस्यमहर्षेर्दुहितावाङ्नाम्नीब्रह्मविदूषीस्वात्मानमस्तौत् ॥ अतः साऋषिः ॥ सच्चित्सुखात्मकः सर्वगतः परमात्मादेवता ॥ तेनहितादात्म्यमनुभवंतीसर्वजगद्रूपेणसर्वस्याधिष्ठानत्वेनचअहमेवभवामीतिस्वात्मानंस्तौति ॥ द्वितीयाजगती ॥ शिष्टाः सप्तत्रैष्टुभः ॥ तथाचानुक्रांतम् ॥ अहमष्टौवागांभृणीतुष्टावात्मानं द्वितीयाजगतीतिगतोविनियोगः ॥ अहमिति॥ अहंसूक्तस्यद्रष्ट्रीवागांभृणीवागांभृणंयद्ब्रह्मजगत्कारणंतद्रूपाभवंतीरुद्रेभिः रुद्रैः एकादशभिः इत्थंभावेतृतीया ॥ तदात्मनाचरामि ॥ एवंवसुभिरित्येतत्तदात्मनाचरामीतियोज्यम्॥ उतापिचआदित्यैः समंचरामि॥उतापिचविश्वदेवैश्च॥ तथामित्रावरुणौ मित्रंचवरुणंच ॥ सुपांसुलुगितिद्वितीयायाआकारः ॥ उभाउभौअहमेवब्रह्मीभूताबिभर्मिधारयामि ॥ इंद्राग्नीअप्यहमेवधारयामि ॥ उभाउभौअश्विनाअश्विनावपिअहमेवधारयामि ॥ मयिहिसर्वंजगत्शुक्तौरजतमिवाध्यस्तंसत्दृश्यते ॥ मायाचजगदाकारेणविवर्त्तते ॥ तादृश्यामायाया

ॐअहंरुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुतविश्वदेवैः ॥ अहंमित्रावरुणोभाबिभर्म्यहमिंद्राग्नीअहमश्विनोभा ॥१॥ अहंसोममाहनसंबिभर्म्यहं त्वष्टारमुतपूषणंभगम् ॥ अहंददामिद्रविणंहविष्मतेसुप्राव्ये३यजमानायसुन्वते ॥२॥ अहंराष्ट्रीसंगमनीवसूनांचिकितुषीप्रथमायज्ञिया नाम् ॥ तांमादेवाव्यदधुःपुरुत्राभूरिस्थात्रांभूर्यावेशयंताम् ॥ ३ ॥

आधारत्वेनासंगस्यापिब्रह्मणः उक्तस्यसर्वस्योपपत्तिः॥ १ ॥अहमिति ॥ अहमाहनसंहंतव्यमभिषोतव्यंसोमम् ॥ यद्वा शत्रूणामाहंतारंदिविवर्तमानंदेवतात्मानंसोममहमेवबिभर्मितथात्वष्टारम्॥उतअपिचपूषणंभगमहमेवबिभर्मि ॥ तथाहविष्मतेहविर्युक्तायसुप्राव्येशोभनंहविर्देवानांप्रापयित्रेतर्पयित्रे ॥ अवतेस्तर्पणार्थात् अवितॄस्तृतंत्रिभ्यईरितिईकारप्रत्ययः॥चतुर्थ्येकवचनेयणिउदात्तस्वरितयोर्यणःस्वरितोनुदात्तस्येत्यनुदात्तस्यसुपःस्वरितत्वम् ॥ सुन्वतेसोमाभिषवंकुर्वते ॥ शतुरनुमइतिचतुर्थ्याउदात्तत्वम् ॥ ईदृशाययजमानायद्रविणंधनंयागफलरूपम् ॥ अहमेवददामिप्रयच्छामि ॥ एतच्चब्रह्मणः फलदातृत्वंफलमतउपपत्तेरित्यधिकरणेभगवताभाष्यकारेणसमर्थितम् ॥ २ ॥ अहमिति॥अहंराष्ट्रीईश्वरनामैतत्॥सर्वस्यजगतः ईश्वरी ॥ तथावसूनांधनानांसंगमनीसंगमयित्रीउपासकानांप्रापयित्री ॥ चिकितुषीयत्साक्षात्कर्त्तव्यंपरंब्रह्मतज्ज्ञा

तवतीस्वात्मतयासाक्षात्कृतवती ॥ अतएवयज्ञियानांयज्ञार्हाणांप्रथमामुख्या॥याएवंगुणविशिष्टाअहंतांमाभूरिस्थात्रांबहुभावेनप्रपंचात्मनातिष्ठमानाम्॥भूरि भूरीणिबहूनिभूतजातानिआवेशयंतींजीवभावेनात्मानंप्रवेशयंतीमीदृशींपुरुत्राबहुषुदेशेषुव्यदधुःविदधंतिकुर्वंति ॥ उक्तप्रकारेणवैश्वरूप्येणावस्थानात् ॥ यद्य त्कुर्वंतितत्सर्वंमामेवकुर्वंतीत्यर्थः ॥३॥ मयासइति॥यअन्नमत्तिसःउक्तशक्तिरूपयामयैवान्नमत्ति ॥ यश्चविपश्यतिसोपिमयैवपश्यति ॥ यश्चप्राणितिश्वासो च्छ्वासादिव्यापारंकरोति ॥ सोपिमयैवप्राणरूपयाकरोति ॥अनप्राणनेअदादिकः रुदादिभ्यःसार्वधातुकेइतीडागमः॥ अनितेरितिणत्वम् ॥ यश्चपरेणोक्तव चनंशृणोतिविविधंरूपंपश्यतिसोपिज्ञानशक्त्यात्मिकयामयैवपश्यति ॥सोपिमयैवशृणोति ॥ श्रुश्रवणे श्रुवःशृचेतिश्नुप्रत्ययः धातोःशृभावश्च॥येईदृशींमंतर्या मिरूपेणस्थितांमांजानंतितेमाममंतवोऽमन्यमानाः अजानंतःउपक्षियंतिउपक्षीणाः संसारेणनहीनाभवंति॥ मनेरौणादिकस्तुप्रत्ययः ॥ नञ्समासेव्यत्ययेनो

मयासोअन्नमत्तियोविपश्यतियःप्राणितियईंशृणोत्युक्तम्॥अमंतवोमांतउपक्षियंतिश्रुधिश्रुतंश्रद्धिवंतेवदामि॥४॥अहमेवस्वयमिदंवदामि जुष्टंदेवेभिरुतमानुषेभिः॥ यंकामयतेतंतमुग्रंकृणोमितंब्रह्माणंतमृषिंतंसुमेधाम्॥५॥ अहंरुद्रायधनुरातनोमिब्रह्मद्विषेशरवेहंतवाउ ॥ अहंजनायसमदंकृणोम्यहंद्यावापृथिवीआविवेश ॥ ६ ॥ दात्तत्वम् ॥ यद्वा भावेतुप्रत्ययः॥ततोबहुव्रीहौनञ्सुभ्यामित्युत्तरपदांतोदात्तत्वम् ॥

माममंतवः मद्विषयज्ञानरहिताइत्यर्थः ॥ हेश्रुतविश्रुतसखेश्रुधि मयावक्ष्यमाणंशृणु छांदसोविकरणस्यलुक्॥श्रुशृणुपृकृवृभ्यइतिहेर्धिर्भावः॥किंतच्छ्रोतव्यंश्र द्धिवं श्रद्धिःश्रद्धातयायुक्तंश्रद्दधानेनलभ्यमित्यर्थः ॥श्रदंतरोरुपसर्गवद्वृत्तिरिष्यतइतिश्रच्छब्दस्यउपसर्गवद्वर्तनात् ॥ उपसर्गेघोःकिरितिकिप्रत्ययः मत्वर्थी योवः ॥ ईदृशंब्रह्मात्मकंवस्तुतेतुभ्यंवदामिउपदिशामि॥४॥अहमेवेति॥अहंस्वयमेवइदंवस्तुब्रह्मात्मकंवदाम्युपदिशामि॥देवेभिः देवैः इंद्रादिभिरपिजुष्टंसेवि तम्॥उतापिचमानुषेभिर्मनुष्यैरपिजुष्टम्॥ईदृग्विधात्मिकाहंयंकामयेयंयंपुरुषंरक्षितुमहंवांछामि॥ तंतंपुरुषमुग्रंकृणोमिसर्वेभ्योधिकंकरोमि॥तमेवब्रह्माणंस्रष्टा रंकरोमि ॥ तमेवऋषिमतींद्रियार्थदर्शनंकरोमि ॥ तमेवसुमेधांशोभनप्रज्ञंचकरोमि॥अष्टमस्यसप्तमेएकादशोवर्गः ॥५॥अहमिति ॥ पुरात्रिपुरविजयसमये

रुद्रायरुद्रस्य षष्ठयर्थेचतुर्थी ॥ महादेवस्यधनुश्चापमहमातनोमिज्यययाआततंकरोमि ॥ किमर्थंब्रह्मद्विषेब्राह्मणानांद्वेष्टारम् ॥ शरवेशरुंहिंसकं त्रिपुरनिवासिनमसुरम् । हंतवेहंतुंहिंसितुम् ॥ हंतेस्तुमर्थेसेसेनितितवेप्रत्ययः ॥ अंतश्चतवैयुगपदितिआद्यंतयोर्युगपदुदात्तत्वम् ॥ शॄहिंसायामित्य स्मात् शॄस्वृस्नुहीत्यादीनाउप्रत्ययः ॥ क्रियाग्रहणंकर्तव्यमितिकर्मणःसंप्रदानत्वाच्चतुर्थी ॥ उशब्दःपूरकः ॥ अहमेवसमदंसंमाद्यंत्यस्मिन्निति सम दंसंग्रामःयोद्धृजनार्थंशत्रुभिःसहसंग्राममहमेवकृणोमिकरोमि ॥ तथाद्यावापृथिवीदिवंचपृथिवींचअंतर्यामितयाअहमेवविवेशप्रविष्टवती ॥ ६ ॥ अहंसुव इति ॥ द्यौःपितेतिश्रुतेः ॥ पिताद्यौःपितरंदिवमहंसुवेप्रसुवेजनयामि ॥ आत्मनआकाशःसंभूतइतिश्रुतेः ॥ कुत्रेतितदाह ॥ अस्यपरमात्मनःमूर्धन्मूर्धनि उपरिकारणभूतेतस्मिन्दिवियद्यत्कार्यजातंसर्वंवर्तते ॥ तंतुषुपटइव ॥ ममचयोनिःकारणम् ॥ समुद्रे समुद्रवंत्यस्माद्भूतजातानिइतिसमुद्रःपरमात्मा ॥ तस्मि

अहंसुवेपितरमस्यमूर्धन्ममयोनिरप्स्वंतःसमुद्रे ॥ ततोवितिष्ठेभुवनानुविश्वोतामूंद्यांवर्ष्मणोपस्पृशामि ॥ ७ ॥ अहमेववातइवप्रवाम्या रभमाणाभुवनाविविश्वा ॥ परोदिवापरएनापृथिव्यैतावतीमहिनासंबभूव ॥ ८ ॥ इति देवीसूक्तम् ॥

न्नप्सुव्यापनशीलासुधीवृत्तिषुअंतर्मध्येयद्ब्रह्मचैतन्यंतन्ममकारणमित्यर्थः ॥ यतःईदृग्भूताहमस्मिततोहेतोःविश्वाविश्वानिसर्वाणिभुवनानिभूतजातानि अनुप्रविश्यवितिष्ठेविविधंप्राप्यतिष्ठामि ॥ समवप्रविभ्यःस्थइत्यात्मनेपदम् ॥ उतापिचअमूंद्यांविप्रकृष्टदेशेवस्थितंस्वर्गलोकम् उपलक्षणमेतत् ॥ एतदुपलक्षि तंकृत्स्नंविकारजातंवर्ष्मणाकारणभूतेनमायात्मकेनमदीयेनदेहेनउपस्पृशामि ॥ यद्वा अस्यभूलोकस्यमूर्धन्मूर्धनिउपरिपितरमाकाशंसुवे ॥ समुद्रेजलधौ ॥ अप्सुउदकेषु ॥ अंतःमध्येममयोनिःकारणभूतःअंभृणाख्यऋषिर्वर्तते ॥ यद्वा समुद्रेअंतरिक्षेअप्सुअम्मयेषुदेवशरीरेषुममकारणभूतंब्रह्मचैतन्यंवर्तते ॥ ततो हंकारात्मिकासतीसर्वाणिभुवनानिव्याप्नोमि ॥ अन्यत्समानंपूर्वेण ॥ ७ ॥ अहमेवेति ॥ विश्वाविश्वानिसर्वाणिभूवनानिभूतजातानिकार्याणिआरभमा णा कारणरूपेणोत्पादयंतीअहमेवपरेणअनधिष्ठितास्वयमेवप्रवामिप्रवर्ते वातइव यथावातःपरेणाप्रेरितःसन्स्वेच्छयैवप्रवातितद्वत् ॥ उक्तंसर्वंनिगमय

ति ॥ परोदिवेति ॥ परइतिसकारांतंपरस्तादित्यर्थेवर्तते ॥ यथाअधइत्यधस्तादर्थेतद्योगेचतृतीयासर्वत्रदृश्यते ॥ दिवःआकाशस्यपरस्तात् ॥ एनापृथिव्याद्वितीयाटौस्स्वेनइतिइदमएनादेशः । सुपांसुलुगितितृतीयाआजादेशः ॥ अस्याःपृथिव्याःपरःपरस्तात् ॥ द्यावापृथिव्योरुपादानमुपलक्षणम् ॥ एतत्उपलक्षितात्सर्वस्माद्भूतजातात्परस्ताद्वर्तमानाअसंगोदासीनकूटस्थब्रह्मचैतन्यरूपाहंमहिनामहिम्नाएतावतीसंबभूव ॥ एतच्छब्देनउक्तंसर्वंपरामृश्यते ॥ एतावत्परिमाणमस्याःयत्तदेतेभ्यःपरिमाणइतिवतुप् ॥ आसर्वनाम्नइत्यात्वम् ॥ सर्वजगदात्मनाअहंसंभूतास्मि ॥ महच्छब्दादिमनिचिटेरितिटिलोपः ॥ ततस्तृतीयायामुदात्तनिवृत्तिस्वरेणतस्याउदात्तत्वम् ॥ छांदसोमलोपः ॥ अष्टमस्यसप्तमेद्वादशोवर्गः ॥ इतिदेवीसूक्तभाष्यम् ॥ ॥

श्रीगणेशायनमः॥ अथैतद्रात्रिसूक्तंरात्रिदेवताप्रतिपादकं सारात्रिदेवताद्वेधाजीवरात्रिरीश्वररात्रिश्चतत्राद्याप्रसिद्धायस्यामस्मदादीनांजीवानांप्रतिदिनंव्यवहारोलुप्यते द्वितीयातुयस्यामीश्वरव्यवहारलोपोभवतिमहाप्रलयकालेतदानीमन्यवस्त्वभावात्केवलंब्रह्ममायात्मकमेववस्तुसर्वकारणमव्यक्तपदवाच्यंतिष्ठतिसाद्वि

ॐरात्रीव्यख्यदायतीपुरुत्रादेव्य१क्षभिः ॥ विश्वाअधिश्रियोधित ॥ १ ॥

तीयारात्रिः ॥ तदुक्तंदेवीपुराणे॥ब्रह्ममायात्मिकारात्रिः परमेशलयात्मिका ॥तदधिष्ठातृदेवीतुभुवनेशीप्रकीर्तितेति॥ तदेवंसर्वोत्तमदेवताप्रतिपादकस्यरात्रिसूक्तस्यभाष्यकारादिभिः कृतव्याख्यानस्यापिविस्पष्टंव्याख्यानंयथामतिक्रियते॥रात्रीति॥यादेवीसर्ववस्तुद्योतनशीलापुरुत्राबहुषुदेशेषुसर्वदेशेषुअक्षभिः प्रकाशमानैरिंद्रियैरुपलक्षणविधयामहदादिभिस्तत्वैर्देवीसर्ववस्तुद्योतनशीलाआयतीआगच्छंतीविद्यमानारात्रीब्रह्ममायात्मिकाव्यख्यत्स्वोत्पादितजगज्जालसदसत्कर्मादिकंप्रथमतोविशेषेणपश्यति ॥ अनंतरंतत्तत्कर्मानुरूपफलरूपाः विश्वाःसर्वाः श्रियः साअध्यधितअदिधारयतिददातीत्यर्थः ॥ अयंभावः॥सर्वकारणभूताचिच्छक्तिः पूर्वकल्पीयानंतजीवानांसदसत्कर्माण्यपरिपक्वान्यवलोक्यतत्फलप्रदानसमयाभावात्सेश्वरंप्रपंचंस्वस्मिन्विलापयतियावत्फलप्रदानसमयम् ॥सारात्रिरूपाचिच्छक्तिः फलप्रदानसमयेप्राप्तेमहदादिद्वाराप्रपंचंनिर्मायतत्तत्प्राणिनांतत्तत्कर्माण्यसंकरमवलोकयतिपश्चात्तत्तत्कर्मफलंददातीत्यहोसर्वज्ञताभगवत्या ॥२३॥

रात्रेर्भुवनेश्वर्याः कियद्वर्णनीयेति ॥ अस्मिन्नर्थेसर्वोप्युपनि[illegible] ॥ १ ॥ इत्थंप्रथमकृत्यंवर्णयित्वाद्वितीयंकृत्यंवर्णयति ॥

रात्रेर्भुवनेश्वर्याः कियद्वर्णनीयेति ॥ अस्मिन्नर्थेसर्वोप्युपनिषद्भागः प्रमाणमितिस्पष्टमेवतद्विदाम् ॥ १ ॥ इत्थंप्रथमकृत्यंवर्णयित्वाद्वितीयंकृत्यंवर्णयति ॥ ओर्वप्राइति ॥ अमर्त्यामरणरहितासादेवीदेवनशीलाचिच्छक्तिर्भुवनेश्वरीरात्रिः उरुविस्तीर्णमंतरिक्षमुपलक्षणविधयासर्वप्रपंचमाप्राः स्वस्वरूपेणापूरयतिस्वाधिष्ठानरूपेस्वाभेदेनविद्यमानंकल्पयति ॥ तथाप्रपंचगतान्निवतोनीचान् लतागुल्मादीन् उद्वतउच्छ्रितान्वृक्षादींश्चस्वकीयेनतेजसाधिष्ठानचैतन्येनाप्राःपूरयति ॥ याराात्रिर्भुवनेश्वरीसाप्रपंचगतानांप्राणिनांवेदोक्तानुष्ठानपराणांचित्तशुद्धिमवलोक्यतेषांतमोमूलाज्ञानंज्योतिषास्वाकारवृत्तिप्रतिबिंबितस्वस्वरूपचैतन्यज्योतिषाबाधतेनाशयति ॥ अनेनपूर्वोक्ताध्यारोपस्यापवादउक्तः ॥ २ ॥ केनप्रकारेणनाशयति तत्राह ॥ निरुस्वसारमिति ॥ आयतीआगच्छंतीदेवनशीलारात्रिश्चिच्छक्तिर्भुवनेश्वरीस्वस्यस्वसारंभगिनीमुषसंप्रकाशरूपामविद्यायाआवरणशक्तिरूपांनिरस्कृतनिष्करोतिदग्धबीजभावमापादयतीत्यर्थः ॥ तस्यामुषसितथाजाता

ओर्वप्राअमर्त्यानिवतोदेव्यु १द्वतः ॥ ज्योतिषाबाधतेतमः ॥२॥ निरुस्वसारमस्कृतोषसंदेव्यायती ॥ अपेदुहासतेतमः ॥ ३ ॥ सानोअद्ययस्यावयंनितेयामन्नविक्ष्महि ॥ वृक्षेनवसतिंवयः ॥ ४ ॥ निग्रामासोअविक्षतनिपद्वंतोनिपक्षिणः ॥ निश्येनासश्चिदर्थिनः ॥ ५ ॥

यांप्रारब्धकर्मक्षयेविक्षेपशक्तेर्नाशान्मूलाज्ञानरूपंतमः अपेदुहासतेअपैवगच्छतिशक्तिद्वयाति रिक्तस्वरूपावस्थानोपयोगाभावादर्थान्नष्टंभवतीत्यर्थः ॥ ३ ॥ अथास्याराात्रेःप्रार्थनामंत्रमाह ॥ सानोइति ॥ अद्यास्मिन्कालेनोस्माकंसारात्रिदेवताचिच्छक्तिर्भुवनेश्वरीप्रसीदतुयस्यायामन् यामनिप्राप्तौसत्यांयत्प्रसादप्राप्तौसत्यांवयंन्यविक्ष्महिनिविशामहेसुखेनस्वस्वरूपेआस्महे ॥ तत्रदृष्टांतः ॥ वयःपक्षिणःवृक्षेनयथावृक्षेनीडाश्रयेवसतिंरात्रिनिवासंकुर्वंतितथानिवसामइत्यर्थः ॥ ४ ॥ निग्रामासोइति ॥ ग्रामासः ग्रामाः तस्था: सर्वेजनाः पामराअपामराआंगोपांगनंन्यविक्षततस्यांचिच्छक्तिरूपायांरात्र्यांविद्यमानायांनिविशंतेसुखेनशेरते तथा पद्वंतः पादयुतागवाश्वादयश्चनिविशंतेत थापक्षिणःपक्षोपेताश्चनिविशंतेतथाअर्थिनः कामार्थिनः पांथस्थाः तथाश्येनासः श्येनाअपिनिविशंते ॥ अयंभावः ॥ येप्राणिनः परमेश्वरीनामानभिज्ञाअपिकेवलंकरुणासागरायारात्रेश्चिच्छक्तेर्भुवनेश्वर्याः करुणयासर्वेजनाः सुखेनशेरतेस्वस्थाभवंति ॥ यथातिमूढाबालाःमातुः

करुणावशाच्छेरतेएतादृशीयमतिकरुणावतीरात्रिरस्तीति ॥ ५ ॥ यावयेति ॥ हेऊर्म्यैरात्रिनामैतत् चिच्छक्तिरात्रिरूपिणीभुवनेश्वरीयस्मात्त्वमतिदयावतीत
स्मादस्माकमपिपामराणांकिंचिदपिकृतमनदेक्ष्यवृक्यंवृकस्यस्त्रियंनानावासनारूपांवृकंचवृकवन्मारकंपापंचास्मान्हिंसंतंयावयअस्मत्तः पृथक्कुरु ॥ तथास्ते
नंतस्करंचित्तापहारकंकामादिकंचयावयास्मत्तोवियोजय ॥ अथानंतरंनोस्माकंसुतरासुखेनतरणीयाक्षेमकरीमोक्षदात्रीभव ॥६॥ हेरात्रिचिच्छक्तेभुवनेश्वरि
पेपिशत्भृशंपिंशत्सर्ववस्तुषुआश्लिष्टंतमोज्ञानंकृष्णंकृष्णवर्णंतमः प्राधान्येनव्यक्तंविशेषेणस्वभासासर्वस्यांजकमीदृशंज्ञानंमाउपास्थितउपागच्छत् ॥ हेउषः
रात्रिदेवतेत्वंमृणेवऋणानीवतत्त्वंयातयापगमय यथास्तोतृणामृणानिधनप्रदानेनापाकरोषितथाममाज्ञानमपि अपसारयेत्यर्थः ॥ ७ ॥ उपतेगाइति ॥ हेरा
त्रिचिच्छक्तेभुवनेश्वरितेत्वांगाइवपयसोदोग्ध्रीर्धेनूरिवउपेत्याकरंस्तुतिजपादिभिरभिमुखीकरोमि ॥ हेदिवः परमाकाशरूपपरमात्मनोदुहितःपुत्रि परमात्मप्र

यावयावृक्यं१वृकंयवयस्तेनमूर्म्यैं ॥ अथानःसुतराभवः ॥ ६ ॥ उपमापेपिशत्तमःकृष्णंव्यक्तमास्थित ॥ उपऋणेवयातय ॥ ७ ॥
उपतेगाइवाकरंवृणीष्वदुहितर्दिवः॥रात्रिस्तोमंनजिग्युषे ॥ ८॥ इति रात्रिसूक्तम् ॥

काशेनचिच्छक्तेरभिव्यज्यमानत्वायुक्तंपरमात्मपुत्रीत्वंत्वत्प्रसादात्कामादीन्शत्रून्जिग्युषेममस्तोत्रंनस्तोत्रमिवहविरपियथाशक्तिदत्तंवृणीष्वभजेति ॥ ८ ॥
इतिरात्रिसूक्तभाष्यंसमाप्तिमगमत् ॥ ग्रीवायांमधुसूदनोस्यशिरसिश्रीनीलकंठःस्थितः श्रीदेवीगिरिजाललाटफलकेवक्षःस्थलेशारदा ॥ षड्वक्त्रोमणिबंधसं
धिषुतथानागास्तुपार्श्वस्थिताः कर्णौयस्यतुचाश्विनौसभगवान्सिंहोममास्त्विष्टदः ॥ १ ॥ यन्नेत्रेशशिभास्करौवसुकुलंदंतेषुयस्यस्थितंजिह्वायांवरुणस्तुहुंकृ
तिरियंश्रीचर्चिकाचंडिका ॥ गंडौयक्षयमौतथोष्ठयुगुलंसंध्याद्वयंपृष्ठकेवज्रीयस्यविराजतेसभगवान्सिंहोममास्त्विष्टदः ॥ २ ॥ ग्रीवासंधिषुसप्तविंशतिमतान्यृ
क्षाणिसाध्याहृदिप्रौढानिर्घृणतातमोस्यतुमहाक्रौर्यैःसमाःपूतनाः ॥ प्राणेयस्यतुमातरःपितृकुलंयस्यास्त्यपानात्मकंरूपेश्रीकमलाकचेषुविमलास्तेस्यूरवे ॥२४॥
रश्मयः ॥ ३ ॥ इतिदेवीपुराणेदेवीवाहनसिंहध्यानम् ॥

रश्मयः ॥ ३ ॥ इतिदेवीपुराणदेवीवाहिनीसिंहध्यानम् ॥



इयं शान्तनवीटीकासमेता नीलकण्ठकृतटीकासहिता-
ङ्गषट्कसहिता सभाष्यदेवीसूक्तरात्रिसूक्तसहिता च दुर्गा-
सप्तशती मुम्बय्यां श्रीकृष्णदासात्मजेन खेमराजेन
स्वकीये 'श्रीवेङ्कटेश्वर' यन्त्रालयेऽङ्कित्वा प्रकाशिता.

संवत् १९५२, शके १८१७, सन् १८९५.



॥ इति शान्तनवीटीकासमेता दुर्गासप्तशती समाप्ता ॥

अत्र च सटीकांगषट्कं सभाष्यं देवीसूक्तं रात्रिसूक्तं च निवेशितमस्माभिः ।

